निर्दग्धं रक्ष इत्यङ्गारमवस्थापयति । १ ॥ ध्रुवमसि पृथिवीं दृंहेति तस्मिन्कपालमुपधायान्वारभ्यायाग्ने ऽग्निमामादं जहीत्यङ्गारं बहिर्भस्म निरस्यति । २ ॥ अग्ने देवयजनं वहेत्यन्यमधिकृत्योत्सृजति । ३ ॥ धरुणमस्यन्तरिक्षं दृंहेति पूर्वं " धर्त्रमसि दिवं दृंहेति पूर्वार्धे " धर्मासि विश्वा विश्वानि दृंहेति मध्यमाद्दक्षिणं " चिदसीति पश्चार्धादुत्तरमध्यर्धं " परिचिदसीति पूर्वार्धाद्दक्षिणं " विश्वासु दिक्षु सीदेति पश्चार्धाद्दक्षिणं " सजातानस्मै यजमानाय परिवेशयेति पूर्वार्धादुत्तरमध्यर्धम् । ४ । एवमेकादशकपालस्य समानं त्रयाणामुपधानम् । ५ । एकमात्रे मध्यमाद्दक्षिणे ' तथोत्तरे । ६ । चतुर्थेन मन्त्रेण दक्षिणयोः पूर्वमुपदधाति ' पञ्चमेनोत्तरयोरपरं ' षष्ठेन दक्षिणयोरपरं ' सप्तमेनोत्तरयोः पूर्वमुत्तमेन शेषाणि कुष्ठासु प्रदक्षिणम् । ७ ॥ वसूनां रुद्राणामित्यङ्गारानभ्यूहति ॥ तप्येथामिति द्वे " तप्यस्वेत्येकम् । ८ । तप्ताभ्यो ऽधिश्रित्य प्रातर्दोहं दोहयति । ९ । निष्टप्योप्यमानायां पात्र्यामवधाय पवित्रे " देवस्य वः सवितुः प्रसव इति पिष्टानि त्रिः संवपति ' तूष्णीं चतुर्थम् । १० । वाचं यच्छत्याभिवासनात् । ११ । पिष्टलेपं निधायोत्पूय तप्ता " कर्योष्ट्वा वाराभ्यामुत्पुनामीति पिष्टान्युत्पुनाति । १२ । वेदोपयामः स्रुवेण प्रणीतानामाहरति ॥ समापा ओषधीभिरित्यासिञ्चति ' तप्ताश्च । १३ ॥ अद्भिः परि प्रजाताः स्थ समद्भिः पृच्यध्वमिति तप्ताः परिस्रावयति । १४ ॥ सीदन्तु विश इति पिष्टानि संनयति । १५ ॥ मखस्य शिरो ऽसीति पिण्डमभिमृशति । १६ ॥ पूषा वां विश्ववेदा विभजत्विति समौ विभजति । १७ ॥ अग्नये त्वेति दक्षिणं पुरोडाशमभिमृशति ' यथादेवतमुत्तरम् । १८ ॥ इदमहं सेनाया अभीत्वर्या मुखमपोहामीति वेदेन कपालेभ्यो भस्मापोहति । १९ ॥ घर्मो ऽसि विश्वायुरित्यधिश्रयत्येवमुत्तरम् । २० ॥ एकैकं कर्मोभयोः कुर्यात् । २१ ॥ उरु प्रथस्वेति यावत्कपालं पुरोडाशं कूर्माकृतिं प्रथयति । २२ ॥ सं ते तन्वा तन्वः पृच्यन्तामिति पिष्टलेपेनाविक्षारयंस्त्रिः परिमार्ष्टि । २३ । दक्षिणाग्नावाज्यं विलाप्य गार्हपत्य उपाधिश्रित्य संपूय वेदोपयामो " ऽदितिरशनाछिन्नपत्रेत्याज्यस्थालीमादत्ते । २४ । दक्षिणा गार्हपत्यात्पवित्रवति " पृश्न्याः पयो ऽस्यग्रेगुवस्तस्य ते ऽक्षो-

---

3 (cf. MS. I, 1, 8-9; IV, 1, 8-9; Âp. Çr. 1, 22-25; Hill. p. 36-43): 2) बहिर्भस्मं M1C (*bahir-bhasma* so auch P2 adv. nach GcNc = *bhasmano bahir*). — 9) °श्रृत्य M1. — 11) वाचं च Gc und, wie es scheint, auch M1. — 13) °तानामप आह° mss. resp. °तामाह° Kc ausser M1C, समाप M1P2Kc u. corr. C gegen MS. I, 5, 3; तप्ताभ्यश्चाज्यः Kc. — 18) यथादैवत° alle ausser M1CGc cf. zu 1, 8, 4, 37. — 19) सेनाया अभी° corr., सेनायाभी° mit krasis die mss. wie stets bei diesem spruch (cf. dagegen die parallelen und die citationsweise सेनाया । इति P3). — 23) Die mss. schreiben °विक्षारयन्त्रिः u. M1 °यंत्रिः — 24) विलाप्य so d. mss. incl. P3 (vielleicht bloss vereinfachte schreibweise für विलाप्य cf zu 1, 5, 4, 18) विलीय Nc; °पत्य उपाधि° so corrigirt auch C, °पत्योपाधि° mit unregelmässiger krasis die mss. wie auch 1, 5, 4, 18; °श्रृत्य M1; °यामो ऽदि° corr., °यामा ऽदि° NS °यामग्रादि° M1 °यामा-

यमायास्य पिन्वमानस्य पिन्वमानं निर्वपामीत्याज्यस्थाल्यां पवित्रवति निर्वपति। २५ ॥ परि वाजपतिरिति कुर्वन्नेषि त्रिः पर्यग्निं करोति। २६ ॥ देवस्त्वा सविता श्रपयत्वित्युल्मुकेनाभितापयति पिष्टलेपं च। २७ ॥ अग्निष्टे तन्वं मा विनैदिति दर्भैस्त्वचं ग्राहयति। २८। न ज्वालानपोहति। २९ ॥ अग्ने ब्रह्म गृह्णीष्वेति वेदेन साङ्गारं भस्मनाभ्यूहति। ३० ॥ अविदहन्तः श्रपयतेति प्रेष्यति। ३१। वाचं विसृजते यजमानश्च। ३२। ॥ ३ ॥

पश्चादाहवनीयस्य यजमानमात्रीं वेदिं मनसा परिमिमीते यथा कुर्वन्नेषि संभवेयुस्तथा तिरश्च्यं-पार्श्वी पुरस्तात्। १। पूर्वार्धे वेद्या वितृतीयमात्रे प्रागुदीचीः स्फ्येन तिस्रो लेखा लिखति। २ ॥ एकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहेत्येतैरसंस्यन्दयंल्लेखासु पिष्टलेपं निनयति। ३।

अयं वेदः पृथिवीमन्वविन्दद्गुहाहितां निहिता गह्वरेषु।
स मह्यं लोकं यजमानाय विन्दत्वहिंस्रं यज्ञं भूरिरेताः कृणोतु ॥

इति वेदमादत्ते। ४।

वेदेन वेदिं विविदुः पृथिवीं सा पप्रथे पृथिवी पार्थिवाय।
गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञस्तायते विश्वदानीम् ॥

इति वेदेन वेदिं प्राचीं त्रिः समुन्मार्ष्टि। ५। उत्तरतो गार्हपत्यस्य देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते। ६ ॥ इन्द्रस्य बाहुरसीत्योषध्यानुमार्ष्टि। नाग्रं प्रत्यभिमृशति। ७। उत्तरतो लेखानामाग्नीध्रः प्रक्रममात्र उत्करे पाणिकोष्ठं कृत्वोपविशति। ८ ॥ पृथिव्या वर्मासीति लेखान्ते तृणं तिर्यग्निदधाति। ९ ॥ पृथिवि देवयजनीति स्फ्येन तिर्यक्छिनत्ति। १० ॥ व्रजं गच्छ गोस्थानमिति सतृणान्पांसूनपादत्ते। ११ ॥ वर्षतु ते पर्जन्य इति वेदिं यजमानं च प्रेक्षते। १२ ॥ बधान देव सवितरिति पाणिकोष्ठे निवपति। १३ ॥ मा वः शिवा ओषधय इति द्वितीयं द्रप्सस्त इति तृतीयम्। समानमन्यत्। तूष्णीं चतुर्थम्

---

द्वि° M2BC (beide comm. erklaren das wiederholt auftretende *vedopayāma* richtig als Bahuvrīhi, möchten aber hier lieber °*yāmam* wohl als adv. lesen). — 25) पवित्रवति beidemal appositionsartig sc. *pātre* (so mit recht Gc; nach Nc masc. pro fem. *pavitravatyām*) cf. 1, 2, 1, 11; bezüglich der wortwiederholung bei zwischengeschobenem spruch cf. 1, 3, 2, 7. 12 u. a. — 30) सांगार° als compos. NSNc cf. Âp. Çr. 1, 25, 12 (*sāṅgaram* so auch P2 u. 3 sc. *puroḍāçam* nach Gc).

4 (cf. MS. 1, 1, 10; IV, 1, 10; Âp. Çr. 2, 1-3; Hill. p. 43-57): 1) तिरश्चा° alle ausser M1CGc (doch erwähnt Gc auch diese lesart). — 3) °संस्पंदयन् fast alle mss. °संस्यंदयंति Kc. — 5) यज्ञस्त्यायते alle ausser C. — — 7) °त्यौषध्या° M1C. — 10) पृथिवी alle

सवस्त्वा परिगृह्णन्त्विति दक्षिणतो " रुद्रास्त्वेति पश्चादादित्यास्त्वे-
ष्या इति खनति द्व्यङ्गुलं चतुरङ्गुलं वा । १६ । उद्धतादाग्नीध्रस्त्रिर्हर-

ततुः सर्वे कर्म कृण्वन्तो मानुषाः । मा हिंसीस्त्वमोषधीः शिवाः ॥

सतृणान्पांसून्हरति । १८ ।

ः कृणुत वेदिमेतद्देवेभ्यो जुष्टामदित्या उपस्थे ।

देवा अनुषन्त विश्वे रायस्पोषाय यजमानं विशन्तु ॥

मध्ये संनतां प्रागुदक्प्रवणां श्लक्ष्णां साधुकृताम् । श्वभ्यामाहवनीयं परिगृह्णाति ' श्रोणि-
गार्हपत्यम् । आहार्यपुरीषां पशुकामस्य । १९ । स्फ्यं प्रक्षालयत्यप्रतिमृशन्नग्रम् । २० । अवोद्य वेदिं
णामग्नमक्ष्योत्तरं परियाकं परिगृह्णाति " सत्यसदसीति दक्षिणत " ऋतसदसीति पश्चाद् " धर्मसद-
सात्युत्तरतः २१ ॥ पुरा क्रूरस्येति स्फ्येन वेदिं प्रतीचीमनुमार्ष्टि वर्त्म कुर्वन् । २२ । पश्चार्धे वेद्या वि-
तृतीयमात्रे तिर्यञ्चं स्फ्यं स्तब्ध्वा " प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुचः संमृड्ढि पत्नीं संनह्याज्येनोद-
केति संशास्ति । २३ । दक्षिणेन प्रोक्षणीरभ्युदानयत्यग्रमुपनिनीय स्फ्यमुच्छ्रति । २४ । वर्त्मनि सादयति
प्रोक्षणीरभिपूरयति । २५ ॥ द्विषतो वधोऽसीति पुरस्तात्प्रत्यञ्चुखः स्फ्येनोत्करमभिक्रान्ति । २६ ।
अभ्युद्य प्रत्यासादयति । २७ । उत्तरत आहवनीयस्येध्माबर्हिरुपसादयेद्दक्षिणमिध्ममुत्तरं बर्हिः । २८ ।
स्रुवं संमार्ष्टि स्रुचः प्राशित्रहरणं च । २९ । ॥ ४ ॥

प्रत्युष्टं रक्ष इत्याहवनीये पात्राणि निष्टपति । १ । वेदप्रलवान्प्रतिविभज्याविभज्य वाभ्याहवं
तिरश्चीः स्रुचः संमार्ष्ट्यग्रैरग्राणि मूलैर्दण्डान्संमृज्याभ्युदयाग्नौ प्रतपति । २ ॥ स्रुवोऽस्यनाधृष्टः सपत्नसाह
इति स्रुवमादत्ते ॥ आयुः प्राणं मा निर्मार्ष्टीरिति संमार्ष्टि ' यथा जुहूं प्राशित्रहरणं च । ३ ॥ जुहूरस्यना-

usser Gc. — 16) खनयति NcGc (wohl ur erklärungsform; *khanati* auch Kc). — 9) वेदिमेतद्देवेभ्यो mss. ausser C. — 21) Fast erwartete man *dharmasad* (so N, aber rein zufällig). — 23) स्रुचः so M1C (zur bed. cf. sū. 29 u. namentlich das folg. cap.) स्रुचश्च M2B (*ca* späterer zusatz) स्रुवं च स्रुचश्च NS nach Âp. Çr. 2, 3, 11 (nicht formell citirt in NcGc). — 24) Von hier bis sū. 7 des folg. cap. fehlt in Gc.

5 (cf. MS. I, 1, 11 ff.; IV, 1, 12. 13; Âp Çr 2, 4-8; Hill p. 57-64): 2) वेदप्ररवा° M1C (in letzterem v. a. h. corr. w. o.), *abhyaharam* so alle «schnabelwärts» cf. Âp. Çr. 2, 4, 4. — 3) °नादष्टः M1C (so auch im folg.

धृष्टा सपत्नसाहीति जुहूमादत्ते ॥ चक्षुः श्रोत्रं मा निर्मार्क्षीरिति प्र-
र्ष्टि । ४ ॥ उपभृदस्यनाधृष्टा सपत्नसाहीत्युपभृतमादत्ते ॥ वाचं पशून्म
प्राचीं वाक्यतः । ५ ॥ ध्रुवास्यनाधृष्टा सपत्नसाहीति ध्रुवामादत्ते ॥ यज्ञं प्र
प्राचीम् । ६ ॥ प्राशित्रहरणमस्यनाधृष्टं सपत्नसाहमिति प्राशित्रहरणमादत्ते .
त्वा सपत्नसाहं संमार्ष्टीति संमार्ष्टि । ७ ।

दिवि शिल्पमवततं पृथिव्याः ककुभिः श्रितम् ॥
तेन सहस्रकाण्डेन द्विषन्तं तापयामसि । द्विषन्तस्तप्यतां बहु ॥

इति संमार्जनान्यवमृज्याभ्युक्ष्याग्नावध्यस्यति । ८ । संमृष्टा यथास्थानमुत्तानाः स्रुचः सादयति ।
पत्नीलोकोपस्थानं कुर्विति प्रेष्यति ॥ पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिंसीरिति दक्षि-
पश्चादपरस्य पत्नीलोकमुपस्थापयति । १० ।

अग्ने गृहपते उप मा ह्वयस्व । देवानां पत्नीरुप मा ह्वयध्वम् ।
अदितिरिव त्वा सपुत्रोपनिषदे येयमिन्द्राणीवाविधवा ॥

इत्युपविशति जानुनी प्रभुज्य । ११ ।

आशासाना सौमनसं प्रजां पुष्टिमथो भगम् ।
अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कम् ॥

इत्युत्तरतो वस्त्रस्य योक्त्रेण पत्नीं संनह्यति उपस्पृश्य वेदोपयामौ दब्धेन त्वा चक्षुषावेक्ष इति पत्न्याज्यम-

---

stets द्, in C zuweilen in ध् corr.); vor *sammārṣṭi* haben स्रुवं NSC; *sammārṣṭi* bis *sapatnasāhī 'ti* des folg sū. fehlt in M2B; *prāçitraharaṇaṁ ca* scheint Nc hier nicht zu lesen. — 4) [ ] fehlt in M1C. — 7) निर्मृत्तद्दाज्ञि त्वा corr. cf. Âp. Çr. 2, 4, 8, निर्मृत्तद्दाच[illegible]त्वा M2B resp. C निर्मृत्तवाचयित्वा N निर्मृत्तंद्दाचयित्वा S निर्मृष्यद्दाचत्वा M1 resp. C (C hatte ursprünglich wie M1, dann corr. wie M2B, schliesslich am rande vielleicht w. o. im text); संमार्ज्मीति mss. ausser M1C (die 1. pers., wie auch C am rande corr., offenbar nach Âp. Çr. l. c.; die 3. pers. zeigt auf's deutlichste die stellvertretende spruchrecitation und kehrt im Mān. Çr. wieder statt der gewöhnlicheren 1. pers. cf. zu 1, 1, 9 vgl. mit 1, 3, 4, 2, wo alle mss. di 3. pers haben). — 8) (hier setzt auch G wieder ein) ककुभिः so schreiben alle wie Âp. Çr. 2, 5, 1, श्रितम् corr. श्रृतं CBS श्रुतं N श्रृणं M2 सृतं M1, तेन corr. तेना d. mss., तप्यतां mss. ausser C. — 10) पत्निलोको° M2B (*patni patni iti çākhāntare* Gc), नमस्तेऽस्तु C. — 11) सपत्रो° M1S, पेयमि° corr. योयमि° d.

पत्ये ऽधिश्रयति । १३ ॥ तेजो ऽसि तेजो ऽनुप्रेहि वायुष्टान्तरिक्षा- प्रति] हरति । १४ ॥ अग्निष्टे तेजो मा विनैदित्याहवनीये ऽधिश्रयति येतयोत्तरतः प्रोक्षणीनां सादयति ' वेदं च । १६ ॥ तेजो ऽसीत्याज्यं यजमानो ना । १७ ॥ देवस्त्वा सवितोत्पुनात्वित्येतया पच्छ आज्यमुत्पुनाति ॥ देवो वः ॥ धामासीति स्रुवेणाज्यानि गृह्णाति चतुर्जुह्वामष्टौ कृत्व उपभृति कनीयः ' यज्ञ- रम् । १९ । आज्यस्थालीं स्रुवं वेदं च गार्हपत्यान्ते निदधाति । २० । दर्भमुष्टिमुपादा- प्रक्षिप्य '' देवीराप इति प्रोक्षणीरुदीरयति । २१ । प्रोक्षणीरुपादाय वेद्यां पदानि लो- कारे लोभनानि प्रविध्याप उपस्पृश्य विषायेध्ममुपादाय परिधीन्ब्रह्माणमामन्त्र्य प्रोक्ष- ति '' कृष्णो ऽस्याखरेष्ठ इतीध्मं '' वेदिरसि बर्हिषे त्वेति वेदिं '' बर्हिरसि वेद्यै त्वेति बर्हिः । २३ । प्रोक्ष्य पश्चार्धे वेद्या वितृतीयमात्रे बर्हिः सादयति । २४ । पुरस्ताद्ग्रन्थिं निदधाति । २५ । अग्राणि प्रो- क्षणीष्वपाययति । २६ ॥ स्वाहा पितृभ्यो घर्मपावभ्य इति मूलदेशे बर्हिषः प्रदक्षिणं प्रोक्षणीर्निनयति । २७ । उद्धृत्य स्रुचमादाय पवित्रे दक्षिणतः परिक्रम्य '' पूषा ते ग्रन्थिं विष्यत्विति बर्हिषो ग्रन्थिं वि- ष्यति । २८ । ॥ ५ ॥

विष्णोः स्तुपो ऽसीति प्रस्तरमपादत्ते । १ ॥ यजमाने प्राणापानौ दधामीति पवित्रे प्रस्तरे विसृ- जति । २ । अग्रेणाहवनीयं पर्याहृत्य प्रस्तरं ब्रह्मणे प्रयच्छति यजमानाय वा । ३ ॥ पुष्टिरसि पोषाय त्वा रयिमन्तं त्वा पुष्टिमन्तं गृह्णामीति मुखतः प्रस्तरं गृह्णाति । ४ । नोन्मृज्यान्नावमृज्यान्न विधूनुयात् । यदुप- तिष्ठेत्तदुपसंगृह्णीयात् । ५ । विस्रंस्य शुल्वं [दक्षिणतो ये दर्भा उदीरणसमये प्रक्षिप्तास्तेषां] दर्भाणामुप- संयम्य [वेदिं] दक्षिणार्धे स्तृणाति । ६ ॥ उरु प्रथस्वेति वेदिं स्तृणात्यपरमपरमग्रधातु बहुलमनारो- कम् । ७ । अपरेण वेदिं परिक्रम्य प्रस्तरं धारयन्परिधीन्परिदधाति '' गन्धर्वो ऽसीति मध्यममिन्द्रस्य

---

mss. (*tvā* sc. *gārhapatyam*, *ye 'yam* sc. *patnī*). — [14]) [ ] fehlt in M1C. — [22]) °रुपादाय GcP3. °ध्ममुपादाय Gc; °खरेष्ठ so C, °खरेष्ठा die ... 7, 6 gegen die regel. — ... ausser M1C. — ... Âp.

(Çr. 2, 8-11; Hill. p. 64-72): [1]) प्रस्तरमादत्ते mss. ausser M1CGc. — [5]) यदुपतिष्ठेत्तदुपति- ष्ठेत्तदुपसंगृ° NS. — [6]) *dakṣiṇato* bis *teṣām* fehlt in M1CP3 und ist höchst wahrscheinlich als glosse in den text der übr. mss gerathen, cf. die abweichende form in Gc: *dakṣiṇato ye prakṣiptā darbhāḥ udīraṇāvasare teṣām*

बाहुरसीति दक्षिणं ॥ मित्रावरुणौ त्वेत्युत्तरम् । ८ । अव्यत्यासधः संधिं करोति । ९ । इध्मदार्वादाय ॥ नित्यहोतारं त्वेत्याघारसमिधमाद द्वितीयाम् । १० ॥ सूर्यस्त्वा रश्मिभिरित्यादित्यं पुरस्तात्परिदधाति । ११ इति तृणे तिरश्ची सादयति चतुरङ्गुलमात्रमन्तरा । १२ ॥ वसूनां रुद्राणामिति । सादयति । १३ ॥ द्यौरसि जन्मनेति जुहूं प्रस्तरे सादयति । १४ । न रिक्तमवमृश-ति । १५ ॥ अन्तरिक्षमसि जन्मनेत्यधस्ताद्विधृत्योरुपभृतं ॥ पृथिव्यसि जन्मनेत्युपा- असंसक्ताः स्रुचो ऽस्रुचोः सादयत्यभिक्रान्ततमां जुहूम् [करोति] । १६ ॥ इदमहं सेनाया ऽभीति वेदेन पुरोडाशयोर्भस्मापोहति । १७ । वेदोपयाम आज्यस्थाल्याः स्रुवेण

आप्यायतां घृतयोनिरग्निर्हव्या नो मन्यताम् ।

त्वमङ्ग त्वमङ्ग सुरूपं त्वा वसुविदं पशूनां तेजसाग्नेये त्वा जुष्टमभिघारयामीत्याग्नेयं पुरोडाशमभिघारयति ॥ यथादेवतमुत्तरम् । १८ ॥ स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामीति पात्र्यामुपस्तृणाति । १९ ।

आर्द्रः पृथुस्नुर्भुवनस्य गोपाः शृत उत्स्नातु जनिता मतीनाम् ।

इत्युदञ्चमुद्वासयति । २० । वेदेनापभस्मानं करोत्यनभिन्नपाणिना वेदशिरसा च । २१ ।

तस्मिन्सीदामृते प्रतितिष्ठन्व्रीहीणां मेधः सुमनस्यमानः ।

इत्युपस्तीर्णे सादयति ॥ यवानां मेध इति यवानाम् । २२ ॥ इरा भूतिः पृथिव्या रसो मोत्क्रमीदिति प्रथ-

---

(ob auch Nc diesen zusatz kennt? *darbhaṇam* ist natürlich gen. part.), *vedim* fehlt in M1CP3. — 8) परिधीन् fehlt in M2B — 10) वर्षिष्ठे ऽधि Gc. — 11) *paridadhati* sc. in gedanken Gc — 13) [ ] fehlt in M1CP3. — 16) [ ] fehlt in M1C. — 17) सेनाया अभी° corr. सेनायाभी° u. भि° d. mss. mit krasis wie 1, 2, 3, 19 u. a. — 18) यथादेवत° mss. ausser M1CGc cf zu 1, 8, 4, 37. — 19) पात्रीमु° alle ausser M1Kc. — 20) पृथुस्नु° so M1Gc पृथस्नु° C pr. m (d. i. wohl auch für *pṛthusnu*°) प्रथस्नु° d. ubr. incl. corr. C nach Âp. Çr. 2, 10, 6 = TBr. 3, 7, 5, 3 (*prathasnu*, wofür PW² *ghṛtasnu* vermuthet, darf als dialectische nebenform von *pṛthusnu* angesehen werden); श्रित C, उदक् (st. *udañcam*) Kc. — 21) वा (st. *ca*) Kc. — 22) सीदामृते wie Âp. Çr. 2, 11, 1 u. TBr. 1, ° ausser M1 resp. °मिते Gc u. C °मृते corr. ist (°*mite* d °*mite* aus ° wied

मोपहिते कपाले ऽभिघारयति । २३ ॥ तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन ॥ तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मेन्द्रियेण वीर्येण ॥ तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिरित्यलंकरोति स्वकृतमनिष्काषमपृषन्तमपर्यावर्तयन् । अधस्ताच्चोपानक्ति । २४ ।

यस्त आत्मा पशुषु प्रविष्टो देवो वाभिष्ठामनु यो विचष्टे ।

आत्मन्वान्सोम घृतवानिहेहि दिवं गच्छ स्वर्विन्द यजमानाय मह्यम् ॥

इति दोह्यावलंकरोति । २५ । अभ्युदाहरति कूर्चोऽपि । २६ ॥ अपगा ऽसि आधार इति दक्षिणतो जुह्वाः पूर्णस्रुवं सादयत्यग्रेण ध्रुवां वेदेरुत्तरेण ध्रुवामाज्यस्थालीमपरेण स्रुग्दण्डान्पात्राणि । दक्षिणस्यां वेदिश्रोणौ सांनाय्यदोहमुत्तरस्यां प्रातर्दोहम् । २७ । वेदिं स्तृणात्यनधिस्तृणन्नलान् । २८ । पश्चाद्धोत्रे त्रिधातूपस्तृणाति । दक्षिणातूलान्मध्ये । २९ । अप उपस्पृश्य ध्रुवा असदन्नित्याज्यानि संमृशति संमृशति । ३० । ॥ ६ ॥

॥ इति मानवसूत्रे प्राक्सोमे द्वितीयो ऽध्यायः ॥

---

ausser M1C — 23) °पधीते M1 fälschlich für °पाधिते °पहिते cf. zu 1, 3, 1, 8 — 24) °निष्काष° corr. cf. 1, 7, 1, 7 u. MS 1, 155, 6, °निकाय° alle (offenbar für °निःकाय° wie auch Âp. Çr. 2, 11, 3, wo n bloss des vorausgeh. r wegen cf. zu 1, 8, 5, 18), °पृषन्तम° corr cf. akurmapṛṣantam Âp. Çr. l. c., °पृशंतम° M1 °निमृशंतम° C °निमृषंतम° d. übr. °मृष्यंतम° Gc (gebraucht in der erkl. pṛṣadbhiḥ, fehlt in Nc) — वाभिष्ठामनु corr. nach भिष्ठा° M1 °भिष्ट्वा° d. übr. (भि in C übrigens undeutlich, abhiṣṭha lässt sich neben viṣṭha TBr. 3, 7, 6, 3 und niṣṭhā Âp. Çr. 2, 10, 5 vielleicht vertheidigen), आत्मन्वा° als gewöhnl. form mss. ausser M1C, निर्हो-हिर्दिवं (°निर्होहिर्दिवं M2B) mss. ausser M1, स्वर्विन्द यज° corr. nach C sec. m., स्वर्विदुर्यज° S u. C pr. m. स्वर्विदुर्यज° M1 स्वर्विदयज° M2BN — 27) पूर्णं स्रुवं Kc, स्रुग्दंडं Gc स्रुग्दण्डात् Kc.

घृतवती अध्वर्य इत्युच्यमाने स्रुचावादाय दक्षिणातिक्रामति ।१। अभिक्रामन्नाश्राव्य पञ्च प्रयाजान्यजति ॥ समिधो यजेति प्रथमं " यज यजेत्युत्तरान् ।२। त्रिभिः प्रचर्योपभृतस्य जुह्वामानीय समानत्र जुहोति ।३। अत्याक्रम्याभिघारयति ध्रुवां दक्षिणं पुरोडाशं पुनर्ध्रुवामुपांश्वाज्यायोत्तरं पुरोडाशं सांवंदोक्कं प्रातर्दोकमुपभृतमन्ततः ।४। स्रुवेणावद्यति चतुः पञ्चकृत्वो जामदग्न्यस्य । द्व्यन्यत्रावत्तं जामदग्न्यमामध्य कुर्वीत ।५। आज्यभागौ यजत्याग्नेयमुत्तरार्धे सौम्यं दक्षिणार्धे ऽनगात्रनहणाय ।६। ध्रौवस्यावदाय

आप्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ।

सूर्याया ऊधरदितेरुपस्थ उरमो भव यजमानस्य धेनुः ॥

इत्यवदायावदायाज्यस्थाल्या ध्रुवां प्रत्याप्याययति ।७॥ अग्नये ऽनुब्रूहीत्यनुवाचयति ।८। अनुवाक्यायाः प्रणवेन संस्तुत्याश्रावयति ।९। प्रत्याश्रुते " ऽग्निं यजेति प्रेष्यति ।१०। एवं सौम्येन प्रचरति ।११। उपस्तीर्याप उपस्पृश्य दक्षिणस्य मध्यात् ॥ मा भेर्मा संविक्था मा त्वा हिंसिषं ,, भरतमुद्धरेम ,, वनुष्यवदानानि ते प्रत्यवदास्यामि ,, नमस्ते अस्तु मा मा हिंसीरित्यभिपरिगृह्य संहताभ्यामङ्गुलीभ्यामङ्गुष्ठेन चाङ्गुष्ठपर्वमात्राण्यवदानान्यवद्यति मध्यात्पूर्वार्धाद्द्वितीयम् । पश्चार्धात्तृतीयं यदि पञ्चावदानस्य ।१२। अवत्तमभिघार्य

यदवदानानि ते ऽवद्यन्विलोमाकार्षमात्मनः ।

आज्येन प्रत्यनज्मि तत्त आप्यायतां पुनः ॥

इति पुरोडाशं प्रत्यभिघारयति ।१३॥ अग्नये ऽनुब्रूहीत्यनुवाचयति ।१४। आश्राव्याग्निं यजेति प्रेष्यति ।१५। अन्तराज्यभागावाहुतीः प्रागुदीचीरपायातयति ।१६। ध्रौवस्यावदायोपांशुयाजायाग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायाम् । उपांशु देवते निर्दिशति ।१७। एवमुत्तरस्यावदाय यथादेवतं प्रचरति ।१८। संनयत उपस्तीर्य यथावदानं समवद्यति पुरोडाशस्य दोह्योश्च ॥ इन्द्रायानुब्रूहीत्यनुवाचयति "

---

2 (cf Âp Çr 2, 17-21, Hill. p 91-119) [1]) घृतवतीमध्वर्य mss ausser M1CKeNc. -- [2]) °श्रावयन् mss. ausser M1C. — [5]) चतुःकृत्वः mss ausser M1CKe. - [7]) ऊधोऽदि° (उद्धाद° M2) mss. ausser M1C, °दितिरु° M1, avadaya nach iti in M2B nur einmal (zu demselben vor und nach dem spruch vgl. su 12 u. 1, 2, 3, 25). — [12]) संव्युकथा M1, भरतउद्ध° M1, °द्धरेम ॥ वनु° so alle (ohne ॥ NS, vanusanti acc pl n. «verlangend» sc. nach dir?? Vgl. Âp. Çr. 2, 18, 9 u. TBr. 3, 7, 5, 6, die freilich auch nicht befriedigen), पञ्चावदानः स्यात् Ke cf. zu Man. Gr 2, 2, 16; (zum wiederholten madhyat s. zu su 7). — [16]) Die form apayātayati so alle incl. Kc kehrt auch sonst mehrfach wieder. — [17]) ध्रौ-

महेन्द्रायेति वा । १९ । सांनाय्यचरुपशुपुरोडाशानां पार्श्वेन जुहुयादाज्यानां प्रस्रवणेन । व्याख्यातं
प्रचरणम् । २० ।

ऋषभँ वाजिनँ वयं पूर्णमासँ हवामहे ।
स नो दोहताँ सुवीरँ रायस्पोषँ सहस्रिणम् ॥

पूर्णमासाय सुराधसे स्वाहेति पौर्णमास्यां स्रुवेण जुहोति ।

अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना ।
सा नो दोहताँ सुवीरँ रायस्पोषँ सहस्रिणम् ॥

अमावास्यायै सुराधसे स्वाहेत्यमावास्यायाम् । २१ । स्विष्टकृते मन्वक्तमुत्तरार्धात्स[1]
दि पश्चादवदानस्य । २२ । अवत्तं द्विरभिघार्य नात ऊर्ध्वं कथंचन प्रत्यभिघारयति । २
कृते ऽनुब्रूहीत्यनुवाचयति । २४ । आश्राव्य [प्रत्याश्रुते] अग्निं स्विष्टकृतं यजेति प्रे
सक्तमुत्तरार्धपूर्वार्धे जुहोति । २६ । प्रत्याक्रम्य यथास्थानं स्रुचौ सादयति । २७ । ॥ २

प्राशित्रहरणमुत्तरस्य पश्चात्परिधिसंधेर्व्यूह्याप्रधीरव्योत्तते सादयति । १ । त
वद्यति दक्षिणस्य मध्यात्यवमात्रम् । अङ्गुष्ठेनोपमध्यमया चादायाभिघारयति । २ ।
तस्यामुपस्तीर्णेडायै द्विर्द्विरवद्यति स्वयोगो देवतेभ्यः । ३ । दक्षिणस्य मस्तानवद्यति
दक्षिणार्धादवदाय पूर्वार्धाच्चतमानभागमणं दोर्घमाक्यलेपे पर्यस्य वेदे निदधाति । मध्याद्भूत
न्नवदानानि । ५ । ध्रौवस्यावदायानुपूर्वमितरेषाम् । ६ । इडामभिघार्य प्रत्यङ्ङासीनो होत्रे
अन्तरेण होतारमिडां चाध्वर्युर्दक्षिणातिक्रामति । ८ । परिप्रगृह्णाति होतानन्तसृतान्होतु
अनन्तयन्तरमग्ने ऽथ बाह्यम् । ९ । होतुः पाणी द्विर्लेपेनोपस्तृणाति । १० । अवदानं होता रु
न्यञ्च लेपादुपस्तीर्य लेपाद्विरभिघारयति । ११ । उपहूयमानायामृत्विजो ऽन्वारभन्ते यज
उपहूता पृथक्पाण्योराग्नीध्रायावद्यति । १३ । संप्रेष्यति । प उत्तरतस्तान्दक्षिणतः परीते

---

वस्यावद्यो॰ M1 u. zweimal Kc — 15) यथादेवतं mss. ausser M1Kc (fehlt zufällig in C) — 20) प्रस्रवणे Kc, प्रचरंति (st. pracaraṇam) M2. — 25) [ ] fehlt in M1C.

3 (cf. Âp. Çr. 3, 1-4; Hill. p. 119-134): 1) Zur wortstellung utt° paç° par° cf. zu 1, 2, 1, 26; °व्यूह्यो° mss. °व्योत्तत mss. ausser CNc. — 2) — 5) iḍayai fehlt in Kc. — भि° alle ausser M1 cf. Hill. — 9) (zu 9-11 cf. 1, 3, 5, 7-9) प ausser M1CKc, °पर्वाणि M2'

दक्षिणतस्तानुत्तरतः परीतेति । १४ । उपहूतां प्राश्नन्त्यृत्विजो यजमानश्च । १५ । होता प्रथमो भक्षयते ॥ पृथिव्यास्त्वा दात्रा प्राश्नाम्यन्तरिक्षस्य त्वा दात्रा प्राश्नामि दिवस्त्वा दात्रा प्राश्नामि दिशां त्वा दात्रा प्राश्नामीति प्राश्नात्याग्नीध्रः । १६ । शाखापवित्रं विस्रंस्य होताग्निहोत्रहवण्यामवधायान्तर्वेदि निदधाति । १७ । तत्रापो हिष्ठीयं जपन्तो मार्जयन्ते । १८ । ब्रह्मभागं स्थवीयांसं यजमानभागादवदायाज्यलेपे पर्यस्य
ति । १९ । दक्षिणां [पुरोडाशं] चतुरक्तं कृत्वा बर्हिषि सादयति । २० । अभिमृष्टं पात्र्यां निद-
। प्राशित्रहरणमग्रेणाहवनीयं पर्याहृत्य ब्रह्मणे प्रयच्छति । २२ । वेदेन भागौ पर्याहृत्य
ति यजमानाय च । २३ । प्रतिपर्याहृत्य यथास्थानं वेदं निदधाति । २४ । दक्षिणाग्नावोदनं
पारेण स्रुग्दण्डानुदञ्चमुद्वासयति । दोहौ पात्रौ च । २५ । ॥ ३ ॥

होता समिधमादाय " ब्रह्मन्प्रस्थास्यामः [इति ब्रह्माणमामन्त्र्य] „ समिधमाधायाग्नी-
द सकृत्सकृत्संमृड्ढीति प्रेष्यति । १ आग्नीध्रः संमार्गं स्फ्यमुपसंयम्य यथापरिधितमनुलोमं
अग्निं त्वाग्ने सस्रवांसं सनिं सजनिवांसं देवेभ्यो हव्यवाहिवांसं वाजिनं त्वा वाजजितं
मार्ज्मीत्यग्निम् । २ ।

यो देवानामसि श्रेष्ठ उग्रस्तान्निचरो वृषा ।
मृड त्वमस्मभ्यं हृद्धेतदस्तु हुतं तव । स्वाहा ॥

संस्याभ्युदयाग्नावध्यस्यति । ३ । अग्निभूतं जुहूमानीयाश्रावं त्रीननुयाजान्यजति ॥ देवान्य-
" यज यजेत्युत्तरौ । समिधः प्रतीचः । ४ । पश्चार्धादुत्तरेण प्राञ्चावनुसंभिनत्ति । ५ । अत्याथानं स्रुचौ सादयति । ६ । यजमानो " वाजस्य मा प्रसवेनेति दक्षिणेनोत्तानेन पाणिना

---

(gilt auch für 1, 3, 5, 9). — 14) य
s. ausser M1CNc, ये वा fehlt in
7) विस्रस्य Nc (citatform?). —
in M1C, बर्हिसादयति M2B. —
प्रयच्छति fehlt in M1. — 25) प्रत-
usser M1C (hier od° des nach-
n vorangestellt cf. zu 1, 2, 1, 26).

MS. I, 1, 13; IV, 1, 14; Âp.
II, p. 134-150): 1) (zu 1-2 cf. 1,
3, 1, 7-9) अनुयाजि° alle ausser M1C wie 1, 8, 6, 1, [ ] fehlt in M1C, समिधमादायाग्नी° M2B wie 1, 8, 6, 1. — 2) °परिधितम° so hier M1N °परिहितम° CS °परिधिम° M2B cf. zu 1, 3, 1, 8; सकृत् so C, fehlt in M1, द्वि सकृत्सकृत् d. übr.; वाजितं (st. *vājajitam*) M1. — 4) °श्रावयन् (*āçrāvayam* Kc) mss. ausser M1 u. corr. C cf. zu 1, 3, 2, 2 (Nc erklärt iterativ, setzt also *āçrāvam* voraus), समिधि CNcKc (so besser??). — 5) पश्चार्धात् fehlt in Nc. — 7) स्रु-

जुहूं सप्रस्तरामुद्गृह्णाति ॥ अथा सपत्नानिन्द्रो म इति नीचा सव्येनोपभृतं निगृह्णाति ॥ उद्ग्राभश्च निग्राभ-श्चेति व्युद्गृह्णाति । ७ ॥ अथा सपत्नानिन्द्राग्नी म इति व्युदूहति प्राचीं जुहूं प्रस्तरात्प्रतीचीमुपभृतम् । बर्हिर्वेदि निरस्यति । ८ । अभ्युह्य प्रत्यासादयति । न जुहूं प्रस्तरे । ९ । जुह्वानक्ति परिधीन् ॥ वसुर-सीति मध्यममुँपावसुरसीति दक्षिणँ । विश्वावसुरसीत्युत्तरम् । १० । मध्यमे स्रुचोऽग्रं संधाय स्रुग्दण्डे प्रस्तरस्याग्राण्युपसंयम्याश्रावयति । ११ । प्रत्याश्रुत । इषिता दैव्याहोतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहीति प्रेष्यति । १२ । प्रस्तरमपादत्ते । १३ ॥ यजमाने प्राणापानौ दधामीति बर्हिषि विधनो प्रत्यवसृजति ॥ आयुषे त्वेति तृणं संसृजति । १४ ॥ अस्तुभो रिहाणा व्यन्तु वय इति स्रुतु प्रस्तर-मनक्त्यग्राणि जुह्वां । मध्यान्युपभृति । मूलानि ध्रुवायाम् । १५ । तूष्णीं जुह्वामग्राण्यक्त्वा । वशा पृश्निर्भू-त्वेत्यनतिहरन्प्रस्तरस्याग्राण्यादीपयति । १६ ॥ आशास्ते ऽयँ यजमान इत्युच्यमाने सह शाखया प्रस्तर-मनुप्रहरति । १७ ॥ अग्नीदगमयेति प्रेष्यति । १८ । प्रस्तरमाग्नीध्रस्त्रिः पाणिना गमयति । १९ ॥ अनुप्रहर संवदस्वेति चाह । २० ॥ ततो नो वृष्ट्यावतेति तृणमग्नावध्यस्यति । २१ ॥ प्रतिष्ठासीति पृथिवीमाल-भते । २२ ।

पुनर्यमश्चक्षुरदात्पुनरग्निः पुनर्भगः ।
पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्णोः ॥

इति चक्षुषी अभिमृशति । २३ । अप उपस्पृश्य मध्यमं परिधिमन्वारभ्याँगानग्नीदित्याह ॥ अगन्नित्या-ग्नीध्रः ॥ श्रावयेत्यध्वर्युः ॥ श्रौषडित्याग्नीध्रः । २४ ॥ स्वगा दैव्याहोतृभ्यः स्वस्तिर्मानुषेभ्यः शँयोर्ब्रूहीति प्रेष्यति । २५ ॥ तच्छँयोरावृणीमह इत्युच्यमाने मध्यमं दक्षिणं चाधाय ।

यं परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमानः ।
तं त एतमनु जोषं भरामि नेदेष युष्मदपचेतयातै ॥

यज्ञस्य पाथ उपसमितमित्यधस्तात्प्रस्तरस्याहणायोपकर्षति । २६ । उपभृतोऽग्रं जुह्वामाधाय । संस्राव-

---

ह्वामप्रस्तरामु° M1. — 8) Zwischen *iti* u. *vyudū-hati* haben die mss. incl. Kc विषूची als folge eines citatfehlers von MS. I, 8, 16 (cf. zu 1, 3, 1, 14), welches wort daher mit recht in Nc unerklärt bleibt; व्यूहति Kc, बर्हिर्वेदिं M1C बर्हिर्वेदेर् Kc. — 10) °पवसुर° M1C (scheint in letzterem in °*pā*° corr. zu sein). — 11) संधाप्य (d. i. wohl संधाप्य) M1C (ob so besser?). — 12) इति nach *pratyāçruta* haben mss. ausser M1CNc. — 13) °मुपा° mss. ausser M1KcC (corr.) u. Nc (vorausgesetzt). — 17) °नुहरति M2B. — 23) पुनर्मे श्वि° mss. ausser M1C, °क्ष्णयोः (für °क्ष्योः?) M1. — 24) °गादग्नी-दित्याह (eine spätere verbesserung) alle ausser M1 (cf. Âp. Çr. 3, 7, 9 u. andere parallelen). — 25) स्वस्तिमा° NS. — 26) पर्यध-

भागाः स्थेति परिधीनभिजुहोति । २७ ॥ घृताच्यौ स्थो यजमानस्य धुर्यौ पातमिति वेदाँसयोः स्रुचौ विमुञ्चति । कस्तम्बदेशे वा " यतो युञ्जानस्ततो विमुञ्चामीति विमुञ्चति । २८ । न विमुक्ते बर्हिषि प्रत्यासादयति । २९ । स्रुवं जुहूं चादायाध्वर्युः प्रत्युत्क्रामति ' बर्हिषस्तृणं वेदं च होता । आज्यस्थालीमाग्नीध्रः पश्चाद्गार्हपत्यस्य प्राक्तूले तृणे सादयति । ३० । अन्तरेण होतारमग्निं चाध्वर्युः प्रत्युपक्रामति । ३१ । मध्ये होतासीनो घानेन पत्नीः संयाजयति । ३२ । ॥ ४ ॥

वेदोपयामो ऽध्वर्युः सौमायानुब्रूहीत्यनुवाचयति । १ । उत्तरार्धे सोमं यजति ' दक्षिणार्धे त्वष्टारम् । २ । परिश्रित्याहवनीयतो देवानां पत्नीर्यजति । ३ । पुरस्ताद्देवपत्नीनां सिनीवालीं पशुकामस्य यजेदुपरिष्टाद्राकां वीरकामस्य ' कुहूं प्रतिष्ठाकामस्य । ४ ॥ सं पत्नी पत्या सुकृतेषु गच्छतामिति पत्यन्वारब्धं स्रुवेण जुहोति । ५ । परिश्रयणमुपोह्यत्याग्निं गृहपतिं यजति स्विष्टकृत्स्थाने । ६ । दशकृत्वो ऽवदाय होताननुसृजन्होतुरङ्गुलिपर्वणी अनक्ति वाच्यमग्ने ऽध्वारम् । ७ । होतुः पाणी द्विर्लेपेनोपस्तृणाति । ८ । अवदानं होता रन्ध्यति । तदन्यत्र लेपादुपस्तीर्य लेपाद्द्विरभिघारयति । ९ । उपहूयमानायां पत्यन्वारभत आग्नीध्रश्च । १० । उपहूतां प्राश्नीतो होताग्नीध्रश्च । ११ । दक्षिणाग्नाविध्मपरिवासनान्युपसमाधाय ' चतुर्गृहीत आज्ये फलीकरणान्योप्य " या सरस्वती वेशयमनीति जुहोति । १२ । तस्यां पुनर्गृहीत्वा पिष्टलेपं हिरण्यमभिघार्य '

उलूखले मुसले यत्कपाल उपलायां दृषदि धारयिष्यति ।

अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्तां । स्वाहा ॥

इति जुहोति । १३ । वेदेन निर्गृह्याज्यस्यावदाय " ऐन्द्रीयानस्यकमनसा वेशान्कुरु सुमनसः सजातान्स्वाहेति ग्रामकामस्य जुहोति । १४ । पत्न्यै वेदं प्रयच्छति ॥ वेदो ऽसि वेदो मा आभरेति जपति । १५ । तृप्ताहं तृप्तस्त्वामिति प्रतिगृह्णाति । उपस्थे पुत्रकामा निदधीत । १६ ।

---

त्था corr. °धत्ता d. mss, °याति ॥ यज्ञस्य corr. °यातिर्यज्ञस्य d. mss, उपसमित° corr. °संमित° M2BNS °संभित° M1 u. corr. aus °संमि° C — 27) उपभृतो corr. wie, scheint es, auch C a. r. ग्नीप° alle — 28) धुर्या mss. ausser M1C, स्रुचं M1, कंस्तंब° M2B (*kastamba* = *kastambhu*).

5 (cf. MS. I, 4, 3. 8; Âp. Çr. 3, 8-15, Hill. p. 151-170): 3) परिश्र° (°श्रु° N) mss. ausser M1CNc. — 6) स्विष्टंकृतस्थाने alle ausser M1C u. corr. S. — 7) (zu 7-9 cf. 1, 3, 3, 9-11) °तुरंगुली° M2C. — 12) चतुर्गृहीताज्ये M1 mit unregelm. krasis, जुहोति fehlt in M2B. — 13) संयजामि nach

इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सत्यधर्मा।
धातुश्च योनौ सुकृतस्य लोकेऽरिष्टां मा सह पत्या दधातु॥

इति योक्त्रपाशं विचाय सयोक्त्रमञ्जलिं कुरुते।१७।

समायुषा सं प्रजया समग्ने वर्चसा पुनः।
सं पत्नी पत्याहं गच्छे समात्मा तन्वा मम॥

इत्युदकाञ्जलिं निनीय मुखं विमृष्टे।१८। होता वेदं स्तृणाति गार्हपत्यादधि संततमाहवनीयात्।१९॥ अथाश्राव्याग्नेऽसीति ध्रौवस्य सकृदवत्तं जुहोति।२०। सकृद्ध्रुवामाप्याय्य बर्हिषो दर्भमुष्टिमपादायान्तर्वेद्य-घास्मिन्देवा गातुविद इति ध्रुवया संततं समिष्टयजुर्जुहोत्या मन्त्रस्य समापनात्। प्राक्स्वाहाकाराद्दर्भ-मुष्टिमनुप्रहरति।२१॥ यानि घर्मे कपालानीत्येतया कपालानि विमुञ्चति।२२। संख्यायोदीचीनान्यु-द्वासयति " ये घर्म इति द्वे " यद्वर्ग इत्येकम्।२३॥ को वो विमुञ्चतीति प्रणीता मनसा विमुच्याग्रेणाह-वनीयं पर्याहृत्य " पोषाय त्वेत्यन्तर्वेदि निदधाति।२४॥ दिवि शिल्पमवततमित्येतया बर्हिरनुप्रह-रति।२५।

स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिंसीरनु या शयाना।
दर्भैः स्तृणीत हरितैः सुपर्णा निष्का होते यजमानस्य ब्रध्नम्॥

इति होतृषदनं वेदिं संछादयति।२६॥ ब्राह्मणांस्तर्पयेति प्रेष्यति।२७। पौर्णमासीं संस्थाप्येन्द्राय वैमृधायैकादशकपालं निर्वपेद्भ्रातृव्यवान्। तत्र यथाकामं दद्यात्।२८। प्रवृत्तो विकल्पो नोपक्रम्य विरमेत्।२९। अदित्यै घृते चरुममावास्यामिष्ट्वा पशुकामः पशुकामः।३०। ॥५॥

॥ इति मानवसूत्रे प्राक्सोमे तृतीयोऽध्यायः॥

---

Âp. Çr. 3, 10, 1 (st. *saṃsṛjāmi*) mss. ausser M1CKc, [ ] fehlt in M1CNc (aber nicht auch in Kc). — 14) °दाय ॥ ऐन्द्रो° so alle (ob nothwendig mit Âp. Çr. 3, 10, 2 *indro°* zu lesen?), वशान् corr. वेशां d. mss., सजा-तान् corr. सजातां resp. °तां d. mss. — 15) म M1C wie 1, 4, 1, 18 gegen MS. I, 50, 17. — 16) तृप्तोऽहं mss. nach MS. l. c. ausser M1CNc (der zusammenhang verlangt hier das fem., das masc. dagegen 1, 4, 1, 19), निदधाति alle ausser M1C. — 18) तद्भ्न्वा mss. ausser M1C, °कांतलीन° M2 °कांतलीर्नि° M1 °कांतला-न्नि° C. — 21) °मुष्टिमुपा° N, ध्रुवायाः NS ध्रुवा-या M2B, समिष्टयजुर्गिर्जुह्वा° M1 (Nckc auch w. o.) — 23) संख्यये° mss. ausser CNc. — 26) °नुयाशयाना so alle; anders Âp. Çr. 3, 13, 5 = TBr. 3, 7, 5, 13. — 28) Zwischen *nirvaped* und *bhrātṛvyavān* haben दशकपालं निर्वपेद् M2B. — 30) °मावास्यायामिष्ट्वा mss. ausser M1C resp. Nc.

पूर्णे चन्द्रमस्युपवसेत्पौर्णमासीमदर्शने ऽमावास्याम् । पूर्वे वा । १ । केशश्मश्रु वपमानो वापयते दक्षिणोपक्रमान्केशान् । २ । सव्योपक्रमान्नखानध्यात्मं कनिष्ठिकातः कारयते । न कर्त्ता । ३ । पत्नी नखांश्च कारयति । ४ ।

पयस्वतीरोषधयः पयस्वद्वीरुधां पयः ।
अपां पयसो यत्पयस्तेन मामिन्द्र सँसृजस्व ॥

इति पाणौ प्रक्षाल्योपवत्स्यदशनमश्नात्यन्यन्माषेभ्यो मांसाच्च सर्पिष्मत् । ५ । पौर्णमास्यां भुक्त्वामावास्यायां न भुक्तौ स्याताम् । ६ ॥ ममाग्ने वर्च इत्याहवनीये समिधमादधाति पुरस्तात्प्रत्यङ्मुख ऊर्ध्वस्तिष्ठँस्तूष्णीमितरयोः । ७ । कृत्वा अवनिज्य दक्षिणतो व्रतमुपैति । ८ ॥ अग्ने व्रतपते व्रतमालप्स्य इत्याहवनीयमुपतिष्ठते ॥ सम्राडसि व्रतपा असि व्रतपतिरमात्यानित्यन्यान् [उपतिष्ठते] । यद्यस्तमितः स्यादाहवनीयम् । ९ । चासे प्राश्नीयातामारण्यस्य । यस्य च श्वो यक्ष्यमाणः स्यान्न तस्य सायमश्नीयात् । १० । व्रतचार्याहवनीयागारे ऽधः शयीत गार्हपत्यागारे पत्नी । ११ ॥ इयं वः पात्रमनया वो गृह्णामीति प्रणीतासु गृह्यमाणास्विमा मनसा ध्यायेत् । १२ ॥ अग्निँ होतारमुप तँ हुव इति निर्वप्स्यमाने स्रुचँ शूर्पं चाभिमृशेत्क्रियमाणे क्रियमाणे । १३ ॥ यज्ञस्य त्वा प्रमयाभिमयेति वेद्यां परिगृह्यमाणायाम् [जपति] । १४ ॥

---

1 (cf. MS. I, 4, 1. 3-5. 8-9; Âp. Çr. 4, 1-9). — 2) °श्मश्रू (cf. zu 1, 7, 1, 6. 8, 10, zu sū. 2-4 cf. 2, 1, 1, 26-29) alle ausser M1CKc (Web. Ed. p. 175 °श्रू). — 3) °ध्यातं auch Kc (in der Ed. aber l. c. °ध्यात्मकं), °कांतः M2BS. — 5) °पवत्स्यश° C im text (°पवत्स्यदश° C corr. a. r. (M1 schreibt °पवत्ंस्वश°) प्रक्षाल्योपवत्स्यद्यमशनम° Kc! Wie oben auch Maitr. Kar., cf. zu 1, 1, 1, 12. — 6) *amāvāsyāyām* (fehlt in Kc) sc. *ca*? cf. zu 1, 2, 1, 18. — 8) कृत्वा अव° so alle wie MS. I, 52, 11 (in Nc *hastāv av°* corr. als v. l. wie vielleicht auch in C). — 9) [ ] fehlt in M1CNc (wird von letzterem als Erklärung ergänzt). — 10) चासे (cf. 1, 5, 1, 33) so richtig nur CGcP2 चानेत् d. übr. (M1 schreibt वांचेत् entsprechend Nc, der वा zum vorhergeh. sū. zieht und mit चेत् ein neues beginnen lässt, ebenso Kc: *cet sayam açnyā-*

प्रजानां त्वा जातानां धर्त्राय गृह्णामीत्याज्येषु गृह्यमाणेष्वा तृतीयादनुवाकस्य । १५ ॥ युनज्मि त्वा ब्रह्मणा दैव्येनेति परिधिषु परिधीयमानेषु । १६ । चतुर्होत्रा विहव्येन च हवींष्यासन्नान्यभिमृशेत् । १७ । अग्रेण स्रुचो ऽन्तर्वेदि दक्षिणं जान्वाच्याध्यञ्जलौ वेदमादाय " वेदो ऽसि वेदो मा आगमेरिति जपति । १८ ॥ तृप्तो ऽहं नामस्त्वामिति प्रतिगृह्णाति । १९ । दशहोतारं जपेत्पुरस्तात्सामिधेनीनाम् । २० ।

समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः ।

इति समिद्धे । २१ ॥ मनो ऽसि प्राजापत्यं मनसा मा भूतेनाविशेति स्रुवेणाघार्यमाणे । २२ ॥ वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविशेति स्रुचि । २३ ॥ देवाः पितर इति प्रवरे प्रवर्यमाणे प्रागतिकरणात् । २४ । चतुर्होतारं जपेत्पुरस्तात्प्रयाजानाम् । २५ । आश्राविते " मह्यं देवानिति ब्रूयात् । प्रत्याश्रुते " मह्यं देवं यजेत्युक्ते " यथाभागं देवताः प्रति नातिक्रियामीति । वषट्कृते " स्वर्गे लोक इति । २६ । प्रयाजेषु " वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु वसन्तस्याहं देवयज्यया तेजस्वान्पयस्वान्भूयासम् ॥ ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु ग्रीष्मस्याहं देवयज्ययौजस्वान्वीर्यवान्भूयासम् ॥ वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु वर्षाणामहं देवयज्यया पुष्टिमान्पशुमान्भूयासम् ॥ शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु शरदो ऽहं देवयज्ययान्नवान्वर्चस्वान्भूयासम् ॥ हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतां हेमन्तशिशिरयोरहं देवयज्यया सहस्वांस्तपस्वान्भूयासमित्येकैकेन पर्यायेण पृथक्पृथक्प्रयाजाननुमन्त्रयते । २७ । प्रयाजानुयाजाभिवृद्धौ सर्वानभ्यस्येदपि वोपोत्तममुत्तममन्ततः । २८ । ॥ १ ॥

अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुषा चक्षुष्मान्भूयासमित्याज्यभागमनुमन्त्रयते ॥ सोमेन यज्ञश्चक्षुष्मान्सोमस्याहं देवयज्यया चक्षुषा चक्षुष्मान्भूयासमिति द्वितीयम् । १ । पञ्चहोतारं जपेत्पुरस्ता-

---

*tam aranyam vā yasya ca* etc [1]), यजमाना: mss. ausser CNcP2, सा (st. *sayam*) M 1. — [11]) [ ] fehlt in M1CNc (in letzterem bloss erklärungswort). — [16]) °माणेषु M1CNc orthographisch fehlerhaft wie MS 1, 53, 1 — [18]) मं M1C wie 1, 3, 5, 15 gegen MS 1,50, 17. — [21]) समिद्धोग्नि° mss. ausser C. — [22]) मा fehlt in mss. ausser M1C, भूतेना° corr. भूतेना° d. mss. (cf. den folg spruch u. TS. 1, 6, 2, 2) — [24]) प्रव्रियमाणे C sowohl im text wie a. r. corr aus प्रवर्य° nach Āp Çr. 4, 9. 6 cf. Nc, der *pravary°* durch *pravriy°* erklart — [26]) Nc trennt *mahyam devam* (sc. *brayat*) | *yaje°* etc — [28]) °याजवृद्धौ mss ausser M1CNc, भ्यसेद्° alle ausser M1C, °वोत्तम° M1N; °त्तमर्मतत: so NcGe u corr C °त्तमंतत: d. ubr. (°त्तमंगत: N).

2 (cf. MS. I, 2. 1. 4, 1. 5; IV, 2, 5; Āp Çr. 4. 9-12) [1]) चक्षुषा beide mal nur in M1C u. Maitr. Kar. — [6]) •सरस्वत्याहं mit

हविषाम् । २ ॥ अग्निरन्नादो ऽग्नेरहं देवयज्ययान्नादो भूयासमिति हविराकृतिम् । ३ ॥ दब्धिर्नामास्यदब्धो ऽहं भ्रातृव्य दभेयमित्युपाँशुयाजौ । ४ ॥ अग्नीषोमौ वृत्रहणावग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासमित्यग्नीषोमीयम् । ५ ॥ इन्द्राग्न्योरहं देवयज्ययेन्द्रियवान्वीर्यवान्भूयासम् ॥ इन्द्रस्याहं देवयज्ययेन्द्रियवान्भूयासम् ॥ महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयम् ॥ इन्द्रस्य वैमृधस्याहं देवयज्ययासपत्नो भूयासम् ॥ सवितुरहं देवयज्यया सवितृप्रसूतो भूयासम् ॥ सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयम् ॥ पूष्णो ऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासम् ॥ अग्नीन्द्रयोरहं देवयज्यया वीर्यवानिन्द्रियवान्भूयासम् ॥ विश्वेषां देवानामहं देवयज्यया प्रजातिं भूमानं गमेयम् ॥ द्यावापृथिव्योरहं देवयज्यया प्रजनिषीय प्रजया पशुभिर्वनस्पतेरहं देवयज्यया ॥ अस्य यज्ञस्यागुर उदृचमशीयास्य यज्ञस्यागुर उदृचमशीयेत्यनाम्नातेषु । ६ ॥ अग्निः स्विष्टकृद्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्यग्निँ स्विष्टकृतम् । ७ ॥ अग्निर्मा दुरिष्टात्पातु सवितावशँसाद्यो नो अन्ति शपति तमेतेन जेषमिति प्राशित्रमवदीयमानमनुमन्त्रयते । ८ । इडायास्तूष्णीम् । ९ । उपहूते " वसोर्यस्याह्नि श्रेयस्येहीति जपति ॥ चित्तमसि मनासि धीरसीत्यृच्छघृतेन मा समुक्षेत्यक्तम् ॥ अस्मास्विन्द्र इन्द्रियं दधात्विति च । १० ॥ ब्रध्न पाहीति चतुरक्तमभिमृशति । ११ ॥ प्रजापतेर्भागो ऽस्यूर्जस्वान्पयस्वान्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मयि धेह्यक्षितो ऽस्यक्षित्यै मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इह च प्रजापतिरहं त्वया साक्षादृध्यासमित्यन्वाहार्यमासन्नमनुमन्त्रयते । तदाग्नीध्रा दक्षिणा दद्यात् । १२ ॥ मं मे भद्राः सनतयः संनमन्तामिताध्मसंनक्रुते । १३ । सत्रकोनारं जयेत्पुरस्तादनुयाजानाम् । १४ ॥ बर्हिषो ऽहं देवयज्यया प्रजावान्भूयासं " नराशँसस्याहं देवयज्ययेन्द्रियवान्भूयासम् ॥ अग्नेः स्विष्टकृद्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्युत्तमम् । १५ ॥ अग्नेरुज्जितिमनूज्जेषँ " सोमस्योज्जितिमनूज्जेषमित्याज्यभागप्रभृत्या स्विष्टकृतो ऽनुमन्त्रयते ' ऽन्यदुपाँशुयाजौ सूक्तवाके । १६ ॥ सा मे सत्याशीर्देवान्गम्यादिति प्रस्तरे प्रह्रियमाणे

---

krasis in M1C, पुषेयं (पू° M2N cf 1, 4, 3, 1) so alle mss wie Āp. Çr. 4, 10, 1, प्रजातिं (st *prajatim*) mss incl Maitr. Kar. ausser M1C, यज्ञस्यागुरुदृच° beide mal mss incl P3 und Maitr. Kar. ausser C resp corr a r. S cf. PW sub *agur*. — 8) जेषम् Maitr. Kār. — 11) ब्रध्न M1. — 12) साक्षादृध्या° mss ausser M1C (in M1 °दृ° geschr.). — 16) °पाँशुयाजौ so alle [C macht am rande die naheliegende conjectur °पांशुयाजाभ्यां, trennt man aber *anyad* vom vorhergehenden, es adverbial fassend, und ergänzt bei °*yajau* sc. *anumantrayate* wie auch oben sū. 4 erforderlich ist, so ist alles in ordnung; nach Nc °*yajau* sc. *abhilakṣya*, sachlich ist es gleichgultig, ob man °*yajau* oder als von *anyad* abhangig °*yā*·

। १७। तत्र यमिच्छेत्तं वरं वृणीते। १८॥ विष्णुः शंयुर्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमिति शंयोर्वाके। १९॥ वि ते मुञ्चामि रशनां वि रश्मीनिति परिधिषु प्रक्रियमाणेषु। २०॥ इष्टो यज्ञो भृगुभिरिति संस्रावभागेषु। २१॥ अदो मागच्छदो मागम्यादित्युक्तो वरान्वृणीते। २२। ॥ २॥

सोमस्याहं देवयज्यया विश्वं रेतो धेषीय॥ त्वष्टुरहं देवयज्यया सर्वाणि रूपाणि पशूनां पुषेयम्॥ देवानां पत्नीनामहं देवयज्यया प्रजनिषीय प्रजया पशुभो॥ राकाया अहं देवयज्यया वीरान्विन्देयं॥ सिनीवाल्या अहं देवयज्यया पशून्विन्देयं॥ कुह्वा अहं देवयज्यया प्रतिष्ठां गमेयम्॥ अग्निर्गृहपतिर्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन गृहैः प्रतिष्ठां गमेयमित्यग्निं गृहपतिम्। १।

इडास्माननुवस्तां घृतेन यस्याः पदे पुनते देवयन्तः।
वैश्वानरी शक्करी वावृधानोप यज्ञमस्तु नो वैश्वदेवी॥

इतीडाम्। २॥ या सरस्वती वेशभगीनेति युग्यं विमृष्टे। ३॥ निर्द्विषन्तं निररातिं दहेति वेदं स्तीर्यमाणमनुमन्त्रयते। ४॥ सं यज्ञपतिराशिषेति यजमानो यजमानभागं प्राश्नाति। ५। यदि प्रवसेत्समिष्टयजुषा सह जुहुयात्। ६। पश्चाद्वेदेरुपविश्य प्राङ्मुखः॥ मदसि सम्मे भूया इति प्रणीतास्वच्छिन्नमासिच्यमानमनुमन्त्रयते। ७॥ प्राच्या दिशा देवा ऋत्विजो मार्जयन्तामिति प्रतिदिशं यथाम्नातम्। ८।

समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत।
अरिष्टा अस्माकं वीरा मा परासेचि मत्पयः॥

---

*jābhyām* liest? cf. übrigens auch den comm. zu Âp. Çr. 4, 12, 4]. — 17) °देवाग° mss ausser M1C, प्रक्रिय° so Nc प्रक्रय° M1 प्रक्रीय° d. übr. cf. zu sū. 20. — 20) प्रक्रिय° so Nc प्रक्रय° M1 प्रक्रीय° d. übr. cf. zu sū. 17. — 21) भृगुरिति M1

3 (cf. MS. 1, 4, 2. 3. 6-8; Âp. Çr. 4, 13-16): 1) धिशीय C corr. aus धेशीय nach *dhiṣīya* Âp. Çr. 4, 13, 1 धीषीयं S, पूषेयं M2B cf. zu 1, 4, 2, 6; *vīrān vindeyam* bis *devayajyayā* vor ***pratiṣṭhām*** fehlt in M2B; गृहैः (st *gṛhaiḥ*) M1. — 2) इडास्माननुवस्तां corr. nach Âp. Çr. 4, 13, 4 resp. nach C °न'वत्तां mit नु a. r., °स्मानवत्ता (°स्मान्वत्ता M2) d. übr.; यज्ञमस्तुनो so M2BNS u. urspr. C यज्ञस्तुत M1 यज्ञमस्तुत C als randcorrectur cf. Âp. Çr. l. c. — 7) °सिच्यमानमनुम° so M1 u. wohl auch Gc, wenn er erklärt: *praṇītāsu 'pari achinnam āsecanam* (cf. Âp. Çr. 4, 14, 3, auch MS. 1, 54, 2; Katy. Çr. 3, 8, 8 neben sū. 6), °सिच्यमानास्वनुम° d. übr. incl. Nc u. Maitr. Kār. (eine naheliegende, aber nicht nothwendige verbesserung). — 8) प्रदिशं

इति निनीता अनुमन्त्रयते । ९ ।

यद्वस्तु ते सरस्वति गोष्वश्वेषु यन्मधु ।
तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति वर्चसा ॥

इति मुखं विमृष्टे । १० । दक्षिणाया वेदेः प्राचीनं दक्षिणेन पादेन विष्णुक्रमान्क्रामति ॥ विष्णुः पृथिव्यां व्यक्रँस्तेति प्रथमं ॥ विष्णुरन्तरिक्षे व्यक्रँस्तेति द्वितीयं ॥ विष्णुर्दिवि व्यक्रँस्तेति तृतीयमुत्तरमुत्तरं भूयांसम् । ११ ॥ इदमहममुष्य प्राणं निवेष्टयामीति पार्ष्ण्या प्रदक्षिणमावेष्टयति । १२ । यं द्विष्यात्तस्य नाम गृह्णीयात्तूष्णीमनभिचरन्सव्यमन्वावृत्य । १३ ॥ तेजो ऽसीत्याहवनीयमुपतिष्ठते ॥ अग्ने गृहपत इति गार्हपत्यम् । १४ ॥ अमा अनु मा तन्विति पुत्रस्य नाम गृह्णाति ॥ अमू अनु मा तनुतामिति यदि द्वौ ॥ अमी अनु मा तनुतेति यदि बहवः । १५ । अतीमोतैरग्नीनुपतिष्ठते ॥ ये देवा यज्ञहनः पृथिव्यामध्यासत इति गार्हपत्यं ॥ ये देवा यज्ञहनो अन्तरिक्ष अध्यासत इति दक्षिणाग्निं ॥ ये देवा यज्ञहनो दिव्यध्यासत इत्याहवनीयम् । १६ ॥ अग्ने व्रतपते व्रतमचारिषं तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्सं तन्मे ऽजुगुप इति समिधो ऽग्निष्वादधद्व्रतं विमुञ्चति । १७ ।

यज्ञो बभूव स उ वावभूव स प्रजज्ञे स उ वावृधे पुनः ।
स देवानामधिपतिर्बभूव सो अस्मानधिपतीन्करोतु वयं स्याम पतयो रयीणाम् ॥

इति पुनरालम्भं जपति । १८ ॥ गोमं अग्ने ऽविमं अश्वी यज्ञ इति प्राङुत्क्रम्य जपति । १९ । शंय्वन्ते प्राश्नात्यूर्ध्वं वा सांमिष्टयजुषो यजमानो ब्राह्मणाः सांनाय्यस्य सानाय्यस्य । २० । ॥ ३ ॥

॥ इति मानवसूत्रे प्राक्सोमे चतुर्थो ऽध्यायः ॥

---

M2BN. — 9) स्वं M1C — 11) दक्षिणाया M1CKc (wohl durch MS I, 48, 11 hervorgerufen), व्यक्रंस्तेति so Maitr. Kār. neben falschlichem व्यक्रँस्थेति wie alle drei male die mss. (das erste mal C a. r. स्ते). — 13) °न-विचरन् mss. ausser M1C (fehlt in NcGc), *savyam anvavṛtya* zieht Nc zum folg. — 16) अ-तिमोतैर° alle ausser M1C, इति vor *dakṣiṇāgnim* fehlt in mss. ausser M1C. — 17) °व्र-तमाचार्षं (von °*cāriṣam* wohl nur orthographisch verschieden, wie in M1 uberhaupt nicht selten *rṣ* st *riṣ* geschrieben wird cf. z. b. M1C zu 1, 6, 3, 12) M1 u. Maitr. Kar. wie MS IV, 138, 5 ff., तेनारात्स्यं wie MS. l. c. falschlich mss. incl. Maitr. Kār. ausser M1 u. corr. C, जुगुप M1 जूगुप Maitr. Kar. cf. jedoch zu 1, 6, 3, 14. — 18) सोस्मंअधि° (nach einer regel der MS. st. *so 'smān adh°* cf. su. 19) M1 u. corr. C, पुनरालंभं so N u. a. r. S (cf. Âp. Çr. 4, 16, 12) °लंबं d. übr. (auch möglich?). — 19) गोमां NS u. corr. C, विमां NS u. corr. C, प्रागुपक्रम्य mss. ausser M1C (प्राङ् Gc प्राक् Nc: beide ohne verbumsangabe). — 20) cf. Âp. Çr. 4, 14, 2, संनाय्यस्य beide mal M1.

अग्नीनादधीत वसन्ते ब्राह्मणो ग्रीष्मे राजन्यः शरदि वैश्यः। शिशिरँ सर्वेषाम्। १। सोमेन यक्ष्यमाणस्यर्तावनियमो नक्षत्रे च। २। फाल्गुन्यां पौर्णमास्यां पुरस्तादेकाहे द्व्यहे वादधीत। ३। ज्ञातपुत्रो ब्राह्मणः कृत्तिकास्वादधीत। ४। रोहिण्यां फल्गुन्यश्चित्रेत्याम्नातानि। ५। मृगशिरस्यादधीत। ६। पुनर्वस्वोः पश्चा पापीयान्। विशाखयोः प्रजातिकामः। अनुराधास्वृद्धिकामः। प्रोष्ठपदासु प्रतिष्ठाकामः। ७। पौर्णमास्याममावास्यायाँ वादधीत। ८।

यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा।
सं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सह॥

इति शम्यारोहस्याश्वत्थस्यारणी आहरति। ९॥ आयुर्मयि धेह्यायुर्यजमानायेति जपति। १०। परिवापणँ यथा दर्शपूर्णमासयोः। ११। आप्लुत्याहते क्षौमे परिधायोपवत्स्यशनमश्नीतः। १२। प्राचीनप्रवण उदग्वँशशालायां प्राचीनं मध्यमाद्वँशादपराह्णे लक्षणं करोति। १३। उद्धत्यावोक्ष्य तस्मिन्नौपासनीयं ब्राह्मौदनि[illegible]मादधाति शालाग्निं निर्मन्थ्यँ वा। १४। प्रागभिहवादृत्विजो वृणीते। १५।

प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे।
यतो भयमभयं तन्नो अस्त्वव देवानां यज हेड्यानि। स्वाहा॥

---

1 (cf. MS. I, 6, 1. 3. 9. 12; Âp. Çr. 5, 1. 3-7. Cap. 1-2, 9 fehlt in Nc): 1) शिशिरः mss. ausser M1CGc. — 5) फाल्गु° mss. incl. Gc ausser M1C. — 7) पश्चात् mss. ausser M1C (auch Gc?), प्रजापतिकामः NS, अनूराधा° M1C (aber 1, 6, 5, 5 haben auch diese w. o.). — 9) योश्वत्थः schreiben mss. ausser M1, सच mss. ausser NC cf. 1, 5, 3, 8, यज्ञीयैः M1. — 10) आयुर्मे Gc. — 11) दर्शपौर्ण° mss. incl. Gc ausser M1 u. Maitr. Kār. cf. zu 1, 1, 1, 7. — 12) °पवत्स्वनम° M1 °पवत्स्यशनम° Gc cf. zu 1, 1, 1, 11 (wie oben auch Maitr. Kar.). — 13) °प्रवणामुद° mss. ausser M1Gc u. Maitr. Kār. (cf. zu 1, 5, 2, 1; 1, 6, 3, 13), °शालां M2B. — 14) ब्रह्मौ° mss. ausser M1CGc cf. 1, 5, 2, 7, निर्मथं (auch möglich? cf. zu 1, 7,

इत्यभिजुहोति । १६ । चतुःशरावँ रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो निरूप्य माँसतो ऽवहन्ति । १७ । निशायां परीन्धीत । १८ । ब्रह्मौदनं जीवतण्डुलँ श्रपयति । १९ । घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्योत्तरत उद्वासयति । २० । पात्र्यामन्यत्र वोद्धृत्य व्युद्धृत्य प्रभूतँ सर्पिरासिच्याभितो ब्रह्मौदनमृत्विज आर्षेया वृताः पर्युपविशन्ति । दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत उद्गाता पुरस्तादध्वर्युः । २१ । पिण्डानादाय सर्पिषि पर्यस्यावमृज्य प्राश्नन्ति । २२ । तेभ्यो धेनुं ददाति । २३ । चैत्यस्याश्वत्थस्यार्द्रास्तिस्रः समिधः स्तिभिगवतीः सहपलाशाः प्रादेशमात्रीः सर्पिष्मत्योदने पर्यस्य " प्र वो वाजा अभिद्यव इत्येताभिस्तिसृभिः स्वाहाकारान्ताभिरादधाति गायत्रीभिर्ब्राह्मणस्याँबोध्यग्निरिति त्रिष्टुब्भी राजन्यस्य " जनस्य गोपा इति जगतीभिर्वैश्यस्य । २४ । अनुद्धृतसँवत्सरमजस्रमग्निमिन्धीत द्वादशरात्रं त्रिरात्रमेकरात्रँ वा । २५ । नास्याग्निं गृहाद्धरेयुर्नान्यत आहरेयुः । २६ । न प्रयायात् । २७ । नानृतं वदेत् । २८ । न माँसमश्नीयात् । २९ । न स्त्रियमुपेयात् । ३० । श्वो ऽग्नीनाधास्यमान उपवसेत्पूर्वां पौर्णमासीमुत्तराममावास्याम् । नक्षत्रे च । ३१ । व्रतचारिण ऋत्विजः सह सँवसन्ति । ३२ ॥ प्रजा अग्ने सँवासयेत्युत्तरपूर्वस्यां दिशि वासे कल्माषमजं बध्नाति । ३३ । ॥ १ ॥

शल्कैरग्निमिन्धान उभौ लोकौ सनेमहम् ।
उभयोर्लोकयोर्ऋद्धोमि मृत्युं तराम्यहम् ॥

इति शल्कैरग्निमिन्धते । १ । यजमानायारणी प्रयच्छति । २ ।

मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम् ।
अन्तर्वती जन्यं जातवेदसमध्वराणां जनयतं पुरोगाम् ॥

इति प्रतिगृह्णाति । ३ ॥ ऋत्वियवती स्थो ऽग्निरेतसौ रेतो धत्तं पुत्रं प्रजननम् ॥ तत्सत्यँ यद्वीरं बिभृतो वीरं जनयिष्यतस्ते मत्प्रातः प्रजनयिष्येते ते मा प्रजाते प्रजनयिष्यतः प्रजया पशुभिः ॥ इदमहमनृता-

---

1, 38; 1, 8, 3, 3) $M_1C$. — 16) अस्तव corr. अस्तुव d. mss., देवानाँ so alle, यजे ह्य° corr. यजिह्य° d. mss., °डानि so $M_2B$ °नी d. ubr. (*yaje hedy°* so lese ich mit H., vgl. den comm. zu TBr. 1, 2, 1, 9; anders dagegen Garbe Âp. Çr. 5, 5, 8). — 17) निरूप्य mss. ausser $M_1$. — 18) परिरंधीत mss. ausser $M_1C$. — 20) श्रितम° $M_1$? — 21) व्युद्दृत्य mss. ausser $M_1CGc$. — 24) स्तिभिफलवीः । अंकुरवतीर्वा Gc (auch das erstere wohl nicht citatform), सपलाशाः mss. ausser $M_1C$. — 30) स्त्रीमु° C. — 32) सहवसंति (besser so?) mss. ausser $M_1C$.

**2** (cf. MS. I, 6, 1. 3 ff.; Âp. Çr. 5, 1. 2. 4. 8-10): 1) °न उभौ corr. cf. Âp. Çr. 5, 8, 4; TBr. 1, 2, 1, 15 °नमुभौ d. mss.

त्सत्यमुपैमि मानुषाद्दैवं दैवीं वाचं यच्छामीत्युक्त्वा वाचं यच्छति । ४ । दक्षिणाग्नेररणी पत्नी पाणौ कुरुते । ५ । वाग्यतावरणिपाणी जागृतः । ६ । उपव्युषं ब्राह्मौदनिके अरणी निष्टपति । ७ ॥ अयं ते योनिर्ऋत्विय इत्यरण्योः समारोपयति । ८ । अनुगमय्योद्धृत्य भस्म गार्हपत्याय लक्षणं करोति । उद्धत्यावोक्ष्य दक्षिणतःपुरस्ताद्दक्षिणाग्नेर्वितृतीयमात्रे गार्हपत्यलक्षणस्य नेदीयसि समं प्रति पुरस्तादाहवनीयाय । ९ । लक्षणानुपूर्वान्संभारान्निवपति । १० ।

उत्समुद्रान्मधुमाँ ऊर्मिरागात्साम्राज्याय प्रतरं दधानः ।
अमी ये मघवानो वयं चेषमूर्जं मधुमत्संभरेम ॥

इत्यपो ऽनुपदासुका उपसृजति । ११ ॥ इयत्यग्र आसीत् ।

अतो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता व्यसर्पो महित्वा ॥

इति वराहविहतं च न्युप्य तूष्णीं वल्मीकवपां निवपति । १२ ।

यददो दिवो यदिदं पृथिव्याः समानं योनिमभिसंबभूव ।
तस्य पृष्ठे सीदतु जातवेदाः शिवः प्रजाभ्य इह रयो नो अस्तु ॥

इत्यूषान्निवपंश्चन्द्रमसि कृष्णं तदिहेरयेतीमां मनसा ध्यायेत् । १३ ।

चन्द्रमग्निं चन्द्ररथं हरिव्रतं वैश्वानरमप्सुषदं स्वर्विदम् ।
विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥

इति सिकता विपेशला निवपति । १४ ।

अर्दन्ध्याः शर्कराभिस्त्रिभृष्टिभिरन्नयो लोकान्प्रदिशश्चतस्रः ।

---

(cf. zu 1, 5, 1, 13; 1, 6, 3, 13). — 4) बिभृयो nach Âp. Çr. 5, 8, 8 mss. ausser M1CS, मत्प्रातः corr. माप्रातः d. mss., प्रजन-यिष्येते corr. °ष्यते d. mss., जनयि° (nach *prajâte*) M2B, प्रयच्छति (st. *yach°*) M1. 2. — 6) जाग्रतः alle ausser GcS cf. zu Mân. Gṛ. 2, 1, 4. — 7) ब्रह्मौ° wie 1, 5, 1, 14 mss. ausser M1C — 9) °दृत्य mss. ausser M1. 2 CGc. — 10) (hier setzt auch Nc wieder ein) °पूर्व्यासं° (°त्सं° S corr.?) alle ausser M1 (fehlt zufallig in C). — 11) दधानः corr. °नाः d. mss. (fehlt zufallig in C), ऽनुपदासुका corr. °शुका Gc °सुगा d übr. incl. Nc. — 12) Zu *asit* 3. pers. cf. MS. I, 90,4 (2. pers Âp Çr 5,9,10), प्रथमानां mss. ausser NS (fehlt zufallig in C), वराहविहतं so NcP3 °विहितं d. mss. — 13) °बभूव corr. °बभूवुः d. mss. (anders Âp. Çr. 5, 1, 7; TBr. 1, 2, 1, 2. 23 ff.), रयो so M1 रयि C रये (besser so zu lesen?) d übr., °त्यूषान्नि° so M1 cf. MS. I, 91, 2 °त्युषान्नि° C °त्यूषांनि° M3 °त्युषां-नि° BNSNc. — 14) हरिव्रतं so M1. 2 N °व्रतं wie RV. d. übr., तूर्णिं (st. *bhurṇim*) mss.

इति बभ्रूः शर्करा निवपति । १५ । यं द्विष्यात्तं मनसा ध्यायेत् । १६ ।

उदेनमग्ने अधि मातुः पृथिव्या विश आविश महतः सधस्तात् ।
आशुं त्वाजौ दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥

इत्याखुकिरिं निवपति । १७ । तूष्णीं पुष्करपलाशमौडुम्बरं विकङ्कतं शमीमश्वत्थं पलाशमशनिहतं च सप्तमम् । १८ ।

सं वः सृजामि हृदयानि वः संसृष्टं मनो अस्तु वः ।
संसृष्टः प्राणो अस्तु वः संसृष्टास्तन्वः सन्तु वः ॥

इति संभारान्संसृजति । १९ ॥ आयं गौः पृश्निरक्रमीदिति गार्हपत्यलक्षणे संभारानभिमृशत्यन्तश्चरतीति दक्षिणाग्नेस्त्रिंशद्धामेत्याहवनीयस्य । २० । अजानेयमश्वं पुरस्तात्प्रत्यङ्मुखमवस्थापयति । २१ । ॥ २ ॥

गार्हपत्यलक्षणस्य पश्चान्मुञ्जावलोपानन्यद्वा क्षिप्राग्निं निधाय वृषणौ स्थ इति तत्र प्राचाव-प्रच्छिन्नप्रान्तौ दर्भावुर्वश्यसीति तयोरुदक्तूलामधरारणिं पश्चात्प्रजननां मूलत उत्तरारणिं दशहोत्राव-धाय चतुर्होतॄन्यजमानं वाचयति । १ ॥ अग्निं नरो दीधितिभिररण्योरित्येतस्यां साम गायेति प्रेष्यति । २ । समवहितयोरेतो जज्ञ इत्यधिमन्थति । ३ ॥ त्वेषस्ते धूम ऋण्वतीति धूमे जाते । ४ ॥ अदर्शि गातुवित्तम इति जाते । ५ ॥ प्रजापतेष्ट्वा प्राणेनाभिप्राणिमि पूष्णः पोषाय मह्यं दीर्घायुत्वाय शतशारदायेति जातमभिप्राणिति । ६ ॥ यो नो अग्निः पितर इति हृदयदेशमारभ्य जपति यजमानश्चोपोद्यम्य त्रिः पूर्ण-मुखेनोपधमति । ७ ।

यत्पृथिव्या अनामृतं संबभूव त्वे सचा ।
तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥

---

ausser M1C, विपेशला नि° corr. °लान्नि° M1 °लानि° d. übr. (fehlt zufällig in C, bloss °ला Gc: pl. oder sg ?). — 15) अदॅंह्या: corr. °थो: Gc °ह्मा: d. übr. incl. Nc, °स्त्रिभिष्टु-भि° M1C, बभ्रु: mss. ausser M1 (fehlt zufällig in C). — 17) °खुकिरिं so Gc u. MS. I, 91, 14 ff. cf. °खुकरिं Maitr. Kār., °खुकिरं d. mss. incl. Nc cf. आखुकिरश्च P2 an isolirter stelle. — 20) दक्षिणाग्नि° M2, °हवनीयम् M1 °नीय-

अजा° C.

3 (cf. MS. I, 6, 1–5, Âp. Çr. 5, 11 ff.): 1) प्रांचावछिन्न° mss. ausser M1CGc cf. 1, 1, 3, 11. — 3) समवहि° C, यज्ञ mss. ausser M1Nc u. Maitr. Kār., °भिमंथति C u. Maitr. Kār. (ebenso Nc in der erklarung, im text aber w. o.) °धिमंथः M1. — 5) °वित्तम इति corr. nach RV. 8, 103, 1 °वित्तममिति alle. — 6) °भिप्राणिति (st. °भिप्राणिमि) C wie vielleicht auch

इति दक्षिणत आसीनो ब्रह्मा सौत्रामीं शकलमाधास्यमाने संभारेषूपास्येत् । ८ । प्रयक्ष्यजमानो द्वेष्याय रजतमाबध्यमाने ऽपविध्येत् । ९ ॥ यद्दत्तारिक्तस्येति दक्षिणाग्नेर्यं दिव इत्याहवनीयस्य । १० ॥ दोह्या च ते दुग्धभृच्चेति जपति । ११ ॥ घर्मः शिर इति यजमानं वाचयति । १२ ॥ मयि गृह्णामीति हृदयं संकल्पयतो ऽध्वर्युर्यजमानश्च । १३ ॥ भूर्भुवो ऽङ्गिरसां त्वा देवानां व्रतेनादध इत्याङ्गिरसस्यादध्यादग्नेष्ट्वेत्यन्येषामिं-न्द्रस्य त्वेति राजन्यस्य " मनोष्ट्वेति वैश्यस्य ॥ आह्वदि त्वेति सर्वत्रानुषजति । १४ । उपस्थकृतो " भूरि-ति ज्वलन्तमादधाति । १५ । वारवन्तीयेन [साम्ना] परिगीतमनुसृजति । १६ ॥ अग्न आयूंषि पवसे " ऽग्नि-र्ऋषिरग्ने पवस्वेत्येताभिराश्वत्थीस्तिस्रः समिध आदधाति । शमीमयीस्तिस्र । एकामौदुम्बरीम् । १७ । अक्तानामग्नये स्वाहेत्येकैकामादधाति । १८ । गार्हपत्ये ऽग्निप्रणयनान्याधाय । १९ । ॥ ३ ॥

या वाजिन्नग्नेरित्यश्वमभिमन्त्रयते । १ ॥ यदक्रन्द इत्यश्वस्य दक्षिणे कर्णे यजमानो जपति । २ संभारशेषमुपयमनीः कृत्वोर्जसे बलाय त्वेत्यग्निमुद्यच्छति । ३ । आग्नीध्राय प्रदायोद्गात्रे दक्षिणाग्निं मन्थ-ति । धृष्टाद्गार्हपत्याद्वा प्रणयेत् । ४ ॥ भुव इत्यूर्ध्वधुरादधाति । ५ । वामदेव्येन परिगीतमनुसृजति । ६ । अग्निप्रणयनान्यादाय " प्राचीमनु प्रदिशं प्रेहि विद्वानित्यश्वप्रथमाः प्राञ्चो ऽभिप्रव्रजन्ति । ७ । प्रणीयमा-नस्योत्तरतो यजमानो व्रजति । ८ । दक्षिणतो ब्रह्मा रथं वर्तयति रथचक्रं वा । ९ ॥ नाको ऽसि ब्रध्नो ऽसि प्रतिष्ठासंक्रमणातममसीति समयार्धे हिरण्यं निधायावस्थाप्य " यजमानो वरं ददाति । १० । उत्तरेण लक्षणं परिक्रम्याभ्यस्थां विश्वाः पृतना इति दक्षिणेन पादेन पार्श्वतः संभाराणामश्वमाक्रमयति । अपर्यावर्तयन्न-

---

M1 (geschr. °णानि). — 10) °हवनीयस्य (cf. 1, 5, 2, 20) corr. °हवनीयाय (cf. 1, 5, 2, 9) d. mss. (in Nc bloss citirt; fehlt in Gc). — 15) उपस्थंकृत्वा mss. incl. Nc ausser M1CGc cf. Mān. Gṛ. 2, 1, 16. — 16) [ ] fehlt in M1C. — 17) अग्ना nach MS. mss ausser M1CGc u. Maitr. Kar. cf. zu Man. Gṛ. 2, 17, 7 u. ib. Spruchverzeichniss, पवसमग्नि° gegen MS. mss. ausser M1C resp. Maitr. Kār. (citirt ist hier MS. I, 86, 11), °मयीतिस्र mss. ausser M1CGc cf. zu 1, 5, 4, 19. — 19) Die gerundialform im schlusssutra eines capitels dient als zeichen engster beziehung des folgenden zum vorhergehenden, wofür das Âp. Çr. im gegensatz zum Man Çr. eine besondere vorliebe hat.

4 (cf. MS. I, 6, 2. 6 ff; Âp. Çr. 5, 13-18): 1) वाजिन्नग्नइत्य° mss. incl. Nc ausser M1 (hier वाजिंन्नग्नेजिंनग्नेरित्य° verschrieben; fehlt zufällig in C). — 3) °शेषमुपनीकृ° mss. ausser M1CNcGc, कृत्वोर्जसे alle ausser C. — 4) धृष्टा° so C cf. MS. I, 103, 8 धाष्ट्रा° Nc भ्रष्टा° d übr. — 7) दिशं M2BS. — 10) समायार्धे mss. ausser M1 •(*avasthāpya* sc.

रिक्रमयति । ११ । प्रत्यवनीयाग्नं प्रतिलभ्याग्निप्रणयनानि कुल्फदघ्नमुपनियम्य जानुदघ्नमुद्गृह्णीयान्नाभिदघ्नमंसदघ्नम् । १२ । कर्णदघ्नं नात्युद्गृह्य " भुवः स्वरिति यथार्षमादधाति ॥ यत्ते शुक्र शुक्रं ज्योतिः शुक्रं धामाजस्रं तेन त्वादध " इडायास्त्वा पदे वयमिति च । १३ । पुरस्तात्प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नुदिते पार्श्वतः पदस्य " स्वरित्यादधाति । १४ । यज्ञायज्ञीयेन परिगीतमनुसृजति । १५ । सपत्नवतो भ्रातृव्यवतो वा रथचक्रं विकारे त्रिः परिवर्तयेत् । १६ । यजमानो ऽग्नीनुपतिष्ठते " सम्राट्च स्वराट्चेति गार्हपत्यं " विराट्च प्रभूश्चेति दक्षिणाग्निं " विभूश्च परिभूश्चेत्याहवनीयम् । १७ । अग्नीन्परिसमुह्य पर्युक्ष्य परिस्तीर्य ' दक्षिणाग्नावाज्यं विलाप्य गार्हपत्य उपाधिश्रित्य संपूयैवंभूतस्यार्थान्कुर्वीत । १८ । शमीमयीस्तिस्रो ऽक्ताः समिधः " समुद्रादूर्मिरित्येताभिस्तिसृभिः स्वाहाकाराभिरादधाति ॥ ये अग्नयः समनसा इत्यनक्तामौदुम्बरीम् । १९ ॥ सप्त ते अग्ने समिध इति पूर्णाहुतिम् ॥ ये अग्नयो दिवो ये पृथिव्या इत्यग्निविपराणयनीयां जुहोति । २० ॥ अधर्यवे ऽश्वं ददामीति वाचं विसृजते यजमानो ' वरं चापाकरोति । २१ । ॥ ४ ॥

दार्शपौर्णमासिकं विधानमिष्टीनाम् । १ । विकाराननुक्रमिष्यामः । २ । यथाम्नातं देवता उपलक्षयेत शनैः । ३ । तल्या आग्न्याधेयिक्यः सद्यस्कालाः सर्वा उपांशुदेवताः । ४ । निरुप्याग्नेयमष्टाकपालमुपसाद्य प्राक्प्रातर्णादग्निर्मन्व इत्यग्निं विमुच्याग्रेणाहवनीयमुद्धृत्यावोक्ष्याहवनीयात्सभ्यमादधाति ' सभ्या-

---

*açvadīn* Nc) — 11) °भ्यस्तां M2BC, °क्रामयति C, परिक्रामयति mss ausser M1 (fehlt zufällig in C). — 12) प्रतिलब्धा (als *prati l*° auch gut) alle ausser Gc, गुल्फ° alle ausser M1CGc u. Maitr. Kār. (°दघ्न° st. °दघ्न° überall hier und sonst M2B), cf. zu diesem su u. ff. MS. I, 96, 4 ff — 13) °हृत्या M1 wie MS. I, 96, 7; यथार्षमा° so M1 यथार्थमा° Gc यथर्षमा° Nc यथर्षिमा° (unter einfluss von Âp. Çr.) d. übr. (fehlt zufällig in C) [Die conjectur *yathartham* PW³ wird von Gc bestatigt und erklärt, dennoch ist *yatharṣam* richtig, von Âp. Çr. 5, 11, 7 u. oft im gleichen beziehungsfalle durch *yatharṣi* wiedergegeben: gemeint ist MS. I, 87, 3 ff. mit hinweis auf Man. Çr. 1, 5, 3, 14 = MS. I, 86, 7 ff]. — 15) °यज्ञियेन M2BNcGc. — 18) °समूह्य mss ausser M1CNc u Maitr. Kār., विलाप्य Nc (so vielleicht am richtigsten cf. jedoch auch 1, 2, 3, 24; w. o. auch Maitr. Kār. und stets P3), गार्हपत्य उपाधि° corr. °पत्योपाधि° d. mss mit krasis wie 1, 2, 3, 24 °पत्योधि° Nc (citatform?), °श्रृत्य M1, °भूतस्याऽर्थां° mss. incl. Gc ausser M1. — 19) °मयीतिस्रो mss. ausser M1CNc cf. zu 1, 5, 3, 17, येऽग्नयः M1, समनस M1CNc gegen MS. I, 88, 1. — 20) तेऽग्ने M1. — 21) दधामीति M2B.

5 (cf. MS. I, 6, 2; Âp. Çr. 5, 19 ff.): 1) दर्श° alle ausser M1CGc (letzteres daneben auch दर्श°). — 3) उपलक्षेत Gc. — 4) तल्या आग्न्या° corr. nach तंत्र्याग्न्या°

त्पूर्वमावसथ्यम् । ५ । उत्तरेणावोद्याधिदेवनाय संस्तृणाति पूर्वमामन्त्रणाय । ६ । अधिदेवने ऽहत वा-स उदग्दशमास्तीर्य तस्मिँश्चतुःशतमक्षान्निवपति । ७ । आर्याः कितवान्पर्युपविशन्ति । ८ । मध्ये ऽधिदेवने समुह्याक्षान्हिरण्यं निधाय निषसाद धृतव्रत इत्यभिजुहोति । ९ । व्युह्याक्षान्राजन्यस्योतँ नो ऽहिर्बुध्न्य इति सभ्ये जुहोति । १० । यजमानो गां प्रसुवति । ११ । तस्मै शतमक्षान्प्रयच्छति । तान्विचिनुयात् । १२ । तान्कितवान्विजित्य यजमानो गां जेतेति कुरुतेति प्रेष्यति । १३ । तस्याः पदूँपि न किँस्युरङ्कश इव विसर्जयेयुः । १४ । तां रन्धयित्वा तां सभासद्भ्य उपहरेत् । १५ । तया यद्रक्ष्णीयात्तदृत्विग्भ्यो दक्षिणाकाले दद्यात् । रमणीयमत्रैव मन्त्रयेरन् । १६ ॥ एना राजन्नित्यावसथ्ये जुहोति ॥ प्र नूनं ब्रह्मणस्पतिरित्याम-न्त्रणे । १७ । यजमानो ऽग्नीनुपतिष्ठते घर्मः शिर इति गार्हपत्यं पश्चात्प्राङ्मुखो ऽर्को ज्योतिरित्याह-वनीयं पुरस्तात्प्रत्यङ्मुखो वातः प्राण इति दक्षिणतो दक्षिणाग्निमुदङ्मुखो मध्ये ऽवस्थाय कल्पेतां द्यावापृथिवी ये अग्नयः समनसा इत्यग्नीन् । १८ । प्रोक्षणेन प्राशनस्य सिद्धेष्टिः संतिष्ठते । १९ । ॥ ५ ॥

संस्थितायामग्नये पवमानायाष्टाकपालं निर्वपेत् । १ । त्रिंशन्मानं हिरण्यं दक्षिणा । २ । संस्थिता-यामग्नये पावकायाग्नये शुचये ऽष्टाकपालौ । ३ । सप्ततिमानं हिरण्यं दक्षिणा । ४ । संस्थितायामाग्नावैष्णव-मेकादशकपालम् । विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुम् । ५ । आदित्यं घृते चरुं पशुकामः । अग्नीषोमी-यमेकादशकपालं ब्राह्मणः । आवपनश्रृतावमेक्षणौ । ६ । ब्रह्मभागयजमानभागाभ्यां सहादित्यं चरुं ब्रह्मणे

---

Gc (oft und stets mit kurzem *a* im anlaut, einmal auch mit krasis तंन्यागया° citirt), तंन्यग्राग्या° $M_1$C (sc. *vikārah*? zum masc. *āgnyadheyikyah* wäre Man. Gṛ. 2, 1, 15 zu vergleichen), तत्राग्या° d. übr., nach Kc zu Katy. Çr. 4, 5, 9 (s. Ed.) wäre *tantryā* resp ***tatra*** zu streichen oder zum vorhergehenden zu ziehen und zwischen *āgny*° u. *sady*° das wort *iṣṭayaḥ* einzufügen; उपाँशुदेवताः scheint Nc im gegensatz zu Gc nicht als compos. zu fassen (nach $M_1$C u. Nc müsste man anders interpungiren als oben geschehen). — 5) नि-हृत्या° alle ausser $M_1$C, °मुह्त्या° $M_2$B. — 6) °धिदेवनाय $M_2$B. — 7) °देवनेग्रकृतं schreiben alle. — 9) मध्ये ऽधिदे° corr. cf. Âp. Çr. 5, 19, 2 मध्याधिदे° so alle offenbar mit krasis; समुह्या° alle ausser $M_1$C. — 10) व्यू-ह्या° alle ausser $M_{1.2}$ C. — 12) तान् fehlt in $M_2$B. — 14) विचर्ज° (auch möglich) $M_1$Nc resp. C (in letzterem nicht völlig deutlich) — 15) स-भ्या° N u pr. m. S (sec. m. w. o.). — 16) रम-णीयमंत्रैर्मंत्रयेरन् alle ausser $M_1$C. — 17) एता $M_2$B. — 18) मध्येग्रवस्थाय C, येऽग्नयः $M_1$, सम-नस $M_1$CNc gegen MS. cf zu 1, 5, 4, 19; statt इत्यग्नीन् so alle möchte man fast इत्य-ग्नी erwarten cf. Nc: *ity agnin* | *prakṛtatvāt tān eva sabhyāvasathyau* (!), vgl. jedoch auch Âp. Çr. 5, 20, 4.

6 (cf MS. I, 4, 14 ff.; Âp. Çr 5, 20-25) 5) घृतेन $M_2$B — 6) आवपनश्रृ° so

परिहरति । ७ । दक्षिणाकाले ऽन्नमग्नोधे ददात्युपबर्हणं च सर्वसूत्रमनड्वाहमध्वर्यवे धेनुं होत्रे । मिथुनौ वत्सतरौ तयोः साण्डो द्विहायनो रथं युक्तं शतमानं च । इध्मपवर्गे ऽध्वर्यवे वसने । ८ । कृते समिष्टयजुष्यादित्यं चरुं चत्वार ऋत्विजः प्राश्नन्ति । तेभ्यो मुष्करं वत्सतरं ददाति । ९ । सोमेनायक्ष्यमाणो ऽग्नीनाधाय चतुःशरावं व्रीहितण्डुलमोदनमृत्विजो भोजयेत् । १० । आज्यस्येष्टिदेवताभ्यो जुहुयात् । ११ । संवत्सरे हवींषि निर्वपति । १२ । नास्यानश्नन्ब्राह्मणो गृहे वसेत् । १३ । ऋबीसपक्वस्य नाश्नीयात् । १४ । या अन्तर्नाव्यापः स्युर्न तासामाचामेत् । १५ । न क्लिन्नं दार्वभ्यादध्यात् । १६ । स्वकृत इरिणे नावस्येत् । १७ । ग्रामलक्षणं नाहुतो गच्छेत् । अपराह्णे ग्रामलक्षणं व्रजेत् । १८ । दर्शपूर्णमासावारप्स्यमान आरम्भणीयामिष्टिं निर्वपति । आग्नावैष्णवमेकादशकपालमग्नये भगिने ऽष्टाकपालं सरस्वत्यै चरुं सरस्वते द्वादशकपालम् । १९ । प्राक्स्विष्टकृतो द्वादशगृहीतं जुहूमाधायाकूताय स्वाहाकूतये स्वाहेतिप्रभृतिभिर्द्वादशभिर्व्युद्ग्राहं जयाञ्जुहोति ॥ प्रजापतिः प्रायच्छदिति त्रयोदशीम् । यदि कामयेत पुष्यो ब्रह्मवर्चसी स्यादग्ने बलदेति चतुर्दशीम् । यदि कामयेत चित्रमस्यां जनतायां स्यामिति चित्रमह तस्यां जनतायां भवति शबलं तस्यात्मञ्जायत इति । २० । मेक्षणेन चरूणां स्विष्टकृते समवद्यतीडायै च । २१ । मिथुनौ गावौ दक्षिणा । २२ । सूक्तवाके मेक्षणमन्वधास्यति । २३ । पौर्णमास्यामाधाय सोपवसथामारम्भणीयां कृत्वा सद्यस्कालया पौर्णमास्या यजेत । २४ । अमावास्यायामाधाय नक्षत्रे वा पूर्वां पौर्णमासीमुपोष्यारम्भणीयां कुर्वीतोत्तरामुपोष्य पौर्णमास्या यजेत यजेत । २५ । ॥ ६ ॥

॥ इति मानवसूत्रे प्राक्सोमे पञ्चमो ऽध्यायः ॥

---

M1Gc (nach letzterem Bahuvrihi!) °पनंश्र° C °पनःस्रु° M2BNS (*avapanam* in Nc nicht erwähnt; es bereitet in der that schwierigkeit). — [8]) °पबर्हिणं M1; च fehlt (zufällig in C) in allen ausser M1, steht in Maitr. Kar. nach *sarvasutram* und Nc ergänzt es nach *anaḍvāham* (zieht also *upab°* *sarv°* zum folg.). — [9]) °यजुषा° NS, पुष्करं M2BN u. aus मु° a. r. corr. S. — [14]) ऋबीस° so M1Gc u. (रि°) C und wohl auch Nc (hier zweimal ऋजीस° geschrieben, aber durch *pṛthagyam pakvasya* erklärt) ऋजीष° M2B ऋजिप° NS. — [15]) या अन्त° so Kc यांत° d. übr. alle mit krasis — [16]) दार्वादध्यात् Kc. — [17]) इरणे M1C (auch gut cf. Man Gr. 2, 1, 10. 17, 4) — [19]) दर्शपौर्ण° mss. incl. Gc ausser M1Nc cf. zu 1, 1, 1, 7. — [20]) °व्युद्गृहां M1 उद्ग्राहं (st. *vyudgr°*) Gc (उद्गृह्योद्गृह्य Nc offenbar erklärung), जयां M1C (wohl nur orthographisch verschieden von *jayān* sc. *homan*; dagegen *trayodaçīm* — *caturdaçīm* sc. *āhutim*); *yadi* bis *caturdaçīm* fehlt in M2B; तस्यात्मं M1C (zum letzten satz cf. MS. I, 64, 12). — [24]) सोपवासमन्वारम्भणीयां Kc.

उद्धराहवनीयमित्युक्त्वा गार्हपत्यादाहवनीयं ज्वलन्तं प्रणयत्यपराह्णे [1] व्युष्टायां प्रातः । १ ॥ वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीध्रेणैतैस्त्वा पञ्चभिर्दैवैर्ऋत्विग्भिरुद्धरामीत्युद्धरति । २ ।

उद्ध्रियमाण उद्धर पाप्मनो माँ यदविद्वान्यच्च विद्वाँश्चकार ।

अह्ना यदेनः कृतमस्ति पापं सर्वस्मादुद्धृतो मुञ्च तस्मात् ॥

इति करोति ॥ रात्र्या यदेनः [कृतमस्ति पापम्] इति प्रातः । ३ ।

अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै ।

तयाग्ने काममहं जयामि प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ । स्वाहा ॥

इति सायं निदधाति ॥ सूर्यमग्नाविति प्रातः । ४ । नक्तं वा गृह्णीयात् । ५ । गतश्रीः शुश्रुवान्ब्राह्मणो ग्रामणी राजन्यो बहुपुष्टो वैश्यस्तेषां नित्यधृतः । ६ । सकृदाहवनीये ऽभ्यादधाति । ७ । प्रदोषमग्निहोत्रं होतव्यं [8] व्युष्टायां प्रातः । ८ ॥ अग्ने शुन्धस्वेत्याहवनीयं परिमार्ष्ट्यग्ने गृहपते [शुन्धस्व] इति गार्हपत्यमग्ने वह्ने [शुन्धस्व] इति दक्षिणाग्निम् । ९ ॥ ऋतसत्याभ्यां त्वा पर्युक्षामीति सायं पर्युक्षति [11] सत्यर्ताभ्यां त्वेति प्रातः । १० । अग्नीन्परिस्तृणाति । ११ । पश्चादाहवनीयस्योदगग्रान्दर्भान्स्तृणाति । १२ । उत्तरतो गार्हपत्यस्य सँस्तीर्णे समिधं स्रुवमग्निहोत्रहवणीमार्यकृतीमुपसादयति । १३ । उत्तरतो वत्समुपसृ-

---

1 (cf. MS. I, 8, 3-5; Âp Çr. 6, 1-13 resp. bis 15): 1) उत्तराह° M1, व्युकंत्यां so M1CGc व्युक्त्यां Nc व्युष्टायां d. übr. incl. P3 wie sū. 8 alle. — 2) °ग्नाधेतैस्त्वा (st. °ग्नीधे° cf. Âp. Çr. 6, 1, 6) mss. ausser M1C, °दैव्यै° (st. °दैव्यै°? cf. Âp. Çr. l. c.) mss. ausser M1C u. corr. S. — 3) परिह्वरति NS, [ ] fehlt in M1C. — 9) Die beiden eingeklammerten *çundhasva* fehlen in M1CNc als selbstverständlich zu erganzende, *garh° agne vahne ç° iti* fehlt in M2B. — 12) दर्भानास्तृणाति alle ausser M1C resp. Gc. — 14) वत्समवसृ°

जति । प्राङ्मुखीमुपसीदत्यग्निहोत्रीं दोहयत्यन्यच्छूद्रादुदङ्मुखीं वा । १४ ॥ अपोढं जन्यं भयमपोढाः सेना अभीत्वरीरिति गार्हपत्यादुदीचो ऽङ्गारानपोह्य

इडायास्पदं घृतवच्चराचरं जातवेदो हविरिदं जुषस्व ।
ये ग्राम्याः पशवो विश्वरूपास्तेषाँ सप्तानामिह पुष्टिरस्तु ॥

इत्यधिश्रयति । १५ ॥ उद्भवः स्थ इत्यवेक्षेत । १६ ॥ उदक्तं प्रजया पशुभिर्भूयासमित्युल्मुकेनाभितापयति । १७ ॥ करस्ते मा विनैषमित्युदबिन्दुना समुदक्तं प्रतिनयति । १८ ॥ विश्वज्योतिरसीति पुनरवदीपयति । १९ ॥ अन्तरितँ रक्षो अन्तरिता अरातय इति तृणेन त्रिः पर्यग्निं करोति । २० ।

उदेहि वेदिं प्रजया वर्धयास्मानुदस्य द्वेषो अभयं नो अस्तु ।
मा नो हिंसीः शपथो माभिचारः शिवे क्षेत्रे अनमित्रे विराजे ॥

इत्युदगुद्वासयति वर्त्म कुर्वन् । २१ ॥ प्रत्यूढं जन्यं भयं प्रत्यूढाः सेना अभीत्वरीरित्यङ्गारान्प्रत्यूहति । वर्त्म च लोपयति । २२ । पयसा जुहोति दध्ना यवाग्वाज्येन वा । २३ । दध्याज्ययोरधिश्रयणं न स्यादभितापनं च । २४ ॥ निष्टप्तँ रक्षो निष्टप्ता अरातय इति गार्हपत्ये स्रुक्स्रुवौ निष्टपति । २५ । स्रुवे समिधमुपसँगृह्योन्नेष्यामीत्युक्त्वोन्नयामीति प्रातर्भूरिडा भुव इडा स्वरिडा जन इडेत्येकैकेनोन्नयत्युत्तरमुत्तरं भूयाँसं पूर्णमुत्तमँ । सर्वान्वा समान् । २६ ॥ इदं देवानामित्युन्नीतमभिमृशतीदमु नः सहेति शेषम् । २७ ॥ पश्चान्न यच्छति दर्भेषु सादयति । प्राक्तराँ वा । २८ । दशहोत्राग्निहोत्रमुन्नीतमभिमृशति । २९ । उपरिष्टात्स्रुग्दण्डे समिधमुपसँगृह्योर्वन्तरिक्षँ वीहीति समयाग्निँ हरति । ३० ॥ स्वाहाग्नये वैश्वानरायेति समयार्धे नियच्छति । ३१ ॥ वायवे त्वेत्युद्यच्छति । ३२ ॥ अग्रेण यच्छति दर्भेषु सादयति । ३३ ॥ एषा ते अग्ने समित्तया त्वँ वर्धस्व चा च प्यायस्व । वर्धिषीमहि च वयमा च प्यासिषीमहि च स्वाहेति समिधमादधाति । ३४ ।

---

M2BC, °धीमवसोद॰ M1, दोहत्य॰ M2B, अन्यं शूद्राद् Gc (so will auch H.; wäre einzig richtig, wenn *dohayati* nur causative bedeutung haben und *anyad* nicht auch adv. praep. sein konnte cf. 1, 4, 2, 16; Nc lässt *anyac chud°* unerwähnt). — 15) सेना अभी॰ corr. सेनाभी॰ d. mss mit krasis cf. su. 22. — 16) °वेक्षेत alle ausser M1C cf. MS. 1, 119, 12. — 17) विनैषमि॰ corr. cf. Âp. Çr. 6, 6, 7 विनेशमि॰ d. mss. — 20) रक्षोऽन्तरिता mss. ausser M1C. — 22) सेना अभी॰ corr. सेनाभी॰ d. mss. mit krasis wie su 15. — 24) °धितापनं alle ausser wiederholt Gc cf su. 17. — 25) स्रुक्स्रुवं alle ausser M1 cf. Mān. Gr. 2, 2, 9. — 26) °सँग्र्योमुन्नेष्या॰ (cf. Âp. Çr. 6, 7, 1) mss. ausser M1CGcNc, °होन्नयत्युन्नयामीति (hier ohne *om* gegen Âp. Çr. l. c.) mss. ausser M1CNc, भुवरिडा mss. ausser M1C. — 34) तेऽग्ने M1; च vor *svāhā* so alle ist überflüssig (ob aber

प्राणापाने निमिषे ध्यायेत् । ३५ । द्व्यङ्गुले समिधमभिजुहोति श्येनीं ज्वलन्तीं वा । ३६ ॥ भूर्भुवः स्वरग्निहोत्रमग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति ॥ भूर्भुवः स्वरग्निहोत्रँ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः । ३७ ॥ वर्चो मे यच्छेति दर्भेषु सादयति । ३८ ॥ प्रजापते पशून्मे यच्छेति गार्हपत्यमवेक्षते । ३९ ॥ प्रजापतये स्वाहेति मनसोत्तरां भूयसीम् । ४० । शिष्ट्वा भूयिष्ठमँनाभो मृड धूर्तेति समयाग्निं त्रिरुदङ्ङुद्दिशति । ४१ ॥ इषे त्वेत्यवाचीनँ सायमवमार्ष्टि ॥ ऊर्जे त्वेत्यूर्ध्वं दिवोन्मार्ष्टि । ४२ ॥ प्रजां मे यच्छेत्युदग्दण्डां निदधाति । ४३ ॥ ओषधीर्जिन्वेति दर्भेषु लेपं निमार्ष्टि । ४४ ॥ पितृभ्यः स्वधेति दक्षिणत उत्तानं पाणिं निदधाति । ४५ ॥ पूषासीत्यङ्गुल्या द्विः प्राश्नात्यस्पर्शयन्दन्तान् । ४६ ॥ इतरजनेभ्यः स्वाहेति निर्लेढि ॥ गन्धर्वेतरजनेभ्यः स्वाहेति प्रातः । ४७ । अनिर्मृष्टायामासिच्य " सर्पान्पिपीलिकाः प्रीणामि सर्पपिपीलिकाभ्यः स्वाहेति प्रागुदीचीस्त्रिरपो निःसारयति । ४८ । दर्भैः प्रक्षाल्यासिच्य तूष्णीं त्रिर्निनयति । ४९ । पूर्णामादायामृते प्राणं जुहोमि स्वाहेति पश्चादाहवनीयस्योदीचीं निनयति ॥ प्राणममृते प्राणं जुहोमि स्वाहेति प्रातः । ५० । अग्निहोत्रहवणीं प्रतप्य हस्तमवदधाति ' हस्तं वा प्रतप्याग्निहोत्रहवण्यामवधायोद्धृत्योदीचीं निदधाति । ५१ । स्रुवेणापरयोर्जुहोति ॥ अग्ने गृहपत इति गार्हपत्ये सुवार्ध्य " स्वाहेति शेषम् ॥ अन्नपते अन्नस्य नो देहीति दक्षिणाग्नौ सुवार्ध्य " स्वाहेति शेषम् । अहोमो वापरयोः । ५२ । यां प्रथमाग्निहोत्राय दुह्यात्सा दक्षिणा ' पयो वा । ५३ । राजन्यस्याग्निहोत्रं धार्मुकस्य नित्यं ' पर्वस्वितरस्य । भक्तं च नित्यं ब्राह्मणाय दद्यात् । ५४ । ॥ १ ॥

वाग्यतो ऽधिश्रित उन्नीयमाने वा पाणी प्रक्षालयमानो विहव्यस्य चतस्र ऋचो जपति । १ ।

---

zu streichen?). — 35) प्राणया° M1CGc unter einfluss von Âp. Çr. 6, 10, 1 (*prāṇāpāne* ist loc. sg. eines neutralen Dvandva). — 37) °ग्नि-ज्योति° d. mss. — 41) धूर्तेति so alle (nicht etwa mit unregelmassiger krasis für *dhurte* + *iti*, sondern = *dhūrta* + *iti* cf. Âp. Çr. 6, 11, 3; daher ist wohl auch MS. I, 121, 10 *dhūrta* zu lesen), त्रिरुदगुद्दि° mss ausser M1CGcNc cf. MS. l. c. — 42) (cf. MS. I, 121, 12 ff.) सायंमार्ष्टि mss. ausser M1CGcNc. — 43) °गदंडान्नि° M1C (auch Gc? Offenbar nur orthographisch verschieden von den anderen mss, wie überhaupt oft *ṁ* vor *n* resp. *m* zu *n* und umgekehrt *n* vor gewissen consonanten zuweilen auch *ṁ* geschrieben wird), °गदंडां स्रुचं नि° citirt Kc. — 45) स्वाहेति M1 cf. aber auch Âp Çr. 6, 11, 4. — 48) °पीलिकान् (st. °*kāḥ*) M1, auch C? — 49) प्रक्षाल्याचम्य (st. °सिच्य) M1 cf. Âp. Çr. 6, 12, 2. — 50) Statt *parṇām ādāya* haben प्राणम् M2B. — 52) अन्नपते ऽन्नस्य resp. °तेन्नस्य alle ausser M1CGc. — 53) प्रथमामग्नि° NS (vgl. aber auch 1, 6, 2, 3).

2 (cf. MS. I, 5, 1-4 resp. 5-11; Âp. Çr.

दक्षिणतः प्रागुदङ्मुख ऊर्ध्वस्तिष्ठन्नुन्नेष्यामीत्युक्ते " भूर्भुवः स्वरोमुन्नयेत्यनुजानाति । २ । उपविश्याभ्युदाहृतं दशहोत्राभिमृशति ' प्रथमाग्निहोत्रं व्याहृतिभिश्च । ३ । संवत्सरे संवत्सरे च कृतायां पूर्वस्यामुपोत्थायोपप्रयन्तो अध्वरमिति द्वे निगद्य " पुत्रमेतानीत्यग्नीषोमीयया ज्योतिष्म उपतिष्ठते । ऐन्द्राग्न्या तामिद्ध " ऽयमिह प्रथमो धायि धातृभिरिति । ४ । अग्नीषोमीयायाः पुरस्ताद्विहव्यस्य चतस्र ऋचो जपति । ५ ॥ अग्नीषोमा इमं सु म इतिप्रभृत्या समिल्लिङ्गैः । तैस्तिस्रः समिध आदधाति । ६ । समानमा " चित्रावसो स्वस्ति ते पारमशीयेति त्रिः । ७ ॥ अम्भः स्थाम्भो वो भक्षीयेति वत्समालभते । ८ ॥ उप त्वाग्ने दिवे दिव इत्यष्टाभिर्गार्हपत्यमुपतिष्ठते । ९ ॥ ऊर्जा वः पश्यामीति गामालभते । १० ॥ महि त्रीणामवो ऽस्त्वित्याहवनीयमुपतिष्ठते । ११ ॥ निषदो ऽसीति यथोपदिष्टं ब्राह्मणेन । १२ ॥ पूषा मा पथिपाः पात्वित्येकैकेनोपतिष्ठते पृथिवीमन्तरिक्षं दिवं च । १३ ॥ प्राची दिगग्निर्देवतेति प्रतिदिशं यथाम्नातम् ॥ धर्मो मा धर्मणः पात्विति च यथाम्नातम् । १४ । उपविश्यान्तराग्नी " ज्योतिष तन्तवे त्वेति जपति । १५ । सायं पत्न्यन्वास्ते ' न प्रातः । १६ । आभूते

सूर्यपत्नीरुपासरन्देवीरुषस आयतीः ।
ता मा यज्ञस्य मातरो ऽभिषिञ्चन्तु वर्चसा ॥ a)
वर्चसा द्रविणेन च देवीर्मामभिषिञ्चन्तु ।
द्विषन्तो रध्यन्तां मह्यं मा त्वहं द्विषतां रधम् ॥ b)
ऋषिरस्म्येकवीरो विराडो ऽस्मि नृपासहिः ।
आवल्गो ऽस्मि संवल्गो वज्रो ह्यस्मि सपत्नहा ॥ c)
सपत्नानहनं रिपून्प्रतिषिक्ता अरातयः ।
प्रतिषिक्ता अरातयो ऽरिष्टाः संचरमहि ॥ d)

---

6, 16-20 resp. bis 23; fehlt in G(): 1) ऽधिश्रुत M1. — 4) ज्योतिष्म alle ausser C cf. zu Mān Gr. 2, 1, 2. — 5) समिल्लिङ्गैः sc. *upatiṣṭhate* cf 1, 6, 3, 17, तैस् sc. *samidh°*. — 7) चित्रावसो so NS wie MS. I, 68, 8 °वसो: M2BCNc wie Āp. Çr. 6, 16, 10 °वसोचित्रावसो: (für °वसोश्चित्रावसो ?) M1. — 12) sc. MS. I, 79, 19-80, 3 (vgl mit ib. 71, 5-8). — 13) sc. MS. I, 71, 9 ff. u. 15 ff. (vgl. mit ib. 80, 7 ff. u. 11 ff.), च fehlt in M1. — 17) a) आयतीः (gegen das metrum) mss ausser BSNc (auch C?); — b) रध्यन्तां corr. रध्यतां d. mss., द्विषतां gen. pro dat. alle wie TBr. 3, 7, 6, 23 (dagegen dat. RV. 1, 50, 13; AV. 17, 1, 6); — c) विराडो so alle wohl = विराजो (fehlerhaft für dieses oder dialectische nebenform? Die verse klingen populär); — d) सपत्नानहनं corr. सपत्नान्हन्रिपून् NSB u. °रिपुन् M2 सपत्नान्-

मर्त्रागवसुरिति त्रिरुक्त्वा विहव्यस्य चतस्र ऋचो जपति । १७ । यो यजमानो न श्रयान्स्यात्स विहव्यनोपतिष्ठेत । १८ । ॥ २ ॥

दशावरा रात्रीरुषित्वा सहधनः प्रयास्यन्नाधायानियान्यनयोऽक्षान्यपोद्धृत्योर्ध्वं प्रातराहुतेः सर्वेषु पुत्रेषु मोवक्षा वास्तोष्पते ॥ वास्तोष्पत इत्येते निगम्याहुतिं जुहोति ।

तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे ॥

इति द्वितीयाम् । १ । प्रवत्स्यन्नयं ते योनिर्ऋत्विय इत्यरण्योः समारोपयति । यदि गतश्रीः सर्वान् । २ ॥ या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मनात्मानमच्छा वसूनि कुर्वन्नर्या पुरूणि ॥ यज्ञो भूत्वा यज्ञमासीद स्वां योनिं भुव आजायमानः स्वक्षय एहीत्यात्मनि वा समारोपयति । ३ । संताप्यावदाह्यान्प्रयाय सहविहारो यायावरः प्रयाति । ४ ।

उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्या वहतु प्रजानन् ।
आयुः प्रजां रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे ॥

इति मन्थष्यञ्जपति । ५ । एवमेवाहरहरधानमेष्यन्समारोपयत्युपावरोहेति च । ६ ॥ अग्नीञ्ज्योतिष्मतः कुर्वित्युक्त्वा प्रवत्स्यञ्ज्वलत उपतिष्ठते ॥ अहिर्बुध्न्य मन्त्रं मे पाहि तं मे गोपायास्माकं पुनरागमादित्यावसथ्यमुपतिष्ठते ॥ सप्रथः सभां मे पाहि तां मे गोपायास्माकं पुनरागमादिति सभ्यं ॥ यशून्मे शंस्य

---

हन्नपून् M1 सपत्नाहंनपून् C सपत्नानहंरिपून् Nc (alles folge der unerkannten verbalform *ahanam*); — त्रिरुक्त्वा M2B. — 18) °पतिष्ठते M1.

3 (cf. MS. I, 5, 13—14; Âp. Çr. 6, 24-28; Gc bloss bis sû. 8 und selbst da lückenhaft). 1) °न्नाधायान्यान्यनयोऽक्षान्य° C u. (°न्नादाधा°) M1 (aber auch Nc wie oben, Gc fraglich, erklärt aber wie Nc), इत्येताभ्यां (st. *ity ete nig° āh° juh°*) M1 (ältere lesart? Wie oben auch NcGc). *Mit diesem sû. bricht Nc ab!* — 2) = 2, 1, 3, 14. — 3) यज्ञीया M1, °रोहात्मात्मानम° wie Âp. Çr. 6, 28, 11 mss. ausser M1C, स्वां wie Âp. Çr. l. c. mss. ausser M1C, स्वक्षय so alle. — 4) संख्याप्य schreibt M1, °वदाह्यान् (abgeleitet von *avadāha*) so CGc °वदाहान् (geht auch an) d. übr.; प्रयाय so M1 प्रयायात् C प्रयायात् d. übr. (*prayayāt* für *prayaya* sieht wie eine verbesserung aus, die aber nicht nothwendig ist; zur sache vgl. Âp Çr. 6, 28, 8 u. 5, 3, 22 ff, auch Mân. Çr. 2, 1, 3, 15). — 5) Statt वहतु könnte man वह नु (cf. वह नः Âp. Çr. 6, 28, 12) vermuthen, wenn der 2. Pada im Mân. Çr. nicht einfach entlehnt wäre cf. Mân. Gr. 2, 1, 8; RV. 10, 16, 9 u. a.; देव्य° M1. — 6) °पारोहेति M2B.

पाहीत्याहवनीयं " प्रजां मे नर्य पाहीति गार्हपत्यमँन्नं मे बुध्य पाहीति दक्षिणाग्निम् । ७ ॥ इमान्मे मित्रावरुणौ गृहान्गोपायतँ पुत्रमित्यन्तराग्नी तिष्ठञ्जपति । ८ ।

मम नाम प्रथमं जातवेदः पिता माता च दधतुर्न्वग्रे ।
तत्त्वं बिभृहि पुनरा ममैतोस्तवाहमग्ने बिभराणि नाम ॥

इत्याहवनीयमुपतिष्ठते । ९ ।

मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः । मान्तस्थुर्नो अरातयः ॥

इत्यभिप्रव्रज्याग्निसकाशे वाचँ यच्छति । असकाशे [वाचँ] विसृजति । १० । प्रवसन्होमवेलायां प्रतिदिशमग्नीनुपतिष्ठते । ११ ।

विश्वदानीमाभरन्तो ऽनातुरेण मनसा । अग्ने मा ते प्रतिवेशा रिषाम ॥

इति प्रत्येत्य समिधावाहरति । असकाशे वाचँ यच्छत्यग्निसकाशे विसृजति । १२ ॥ अग्नीँ समाधेहीत्युक्त्वा भस्म त्व उपतिष्ठते । १३ ॥ अहिर्बुध्य गन्त्वं मे ऽनुगुपस्तं मे पुनर्देहीत्यावसथ्यमुपतिष्ठते " सप्रथः सभां मे ऽनुगुपस्तां मे पुनर्देहीति सभ्यं " पशून्मे शँस्यानुगुप इत्याहवनीयं " प्रजां मे नर्यानुगुप इति गार्हपत्यमँन्नं मे बुध्यानुगुप इति दक्षिणाग्निम् ।१४॥ इमान्मे मित्रावरुणौ गृहाननुगुपतँ पुत्रमित्यन्तराग्नी तिष्ठञ्जपति।१५।

तव च नाम मम च जातवेदो वाससी इव विवसानौ चरावः ।
ते हि बिभृवो महसे जीवसे च यथायथं नौ तन्वौ जातवेदः ॥

इति समिधो ऽग्निष्वादधत्तूष्णीं सभ्यावसथ्ययोः । १६ । समिल्लिङ्गैरितरेषूपस्थाय चेन्न प्रवसेत्पुनरेत्योपतिष्ठेत । १७ । यद्यनुपस्थिताग्निः प्रवासमापद्येत

— 7) प्रवसन् M2B, उपतिष्ठेत Kc, तं मे corr. तान्मे M1 तन्मे d. übr. (kann auch = तं मे sein cf. gleich weiter तान्मे st. तां मे u. vgl. zu 1, 6, 1, 43); सप्रथ (cf. TBr. 1, 1, 10, 3. 5; 1, 2, 1, 26) mss. ausser M1C cf. zu sū. 14; तान्मे (st. तां मे) alle ausser C. — 9) दधतुर्यदग्ने mss. ausser M1C (*nu* hat steigernde bedeutung; *yad* sieht wie eine glättende verbesserung aus), पुनरागमेतोस्त° M1 und nachträglich corr. S. — 10) [ ] nur in M1. — 12) रिषाम corr. र्षाम M1C ऋषाम d. übr. cf. zu 1, 4, 3, 17, समिधँ आह° (cf. Âp. Çr. 6, 25, 3) mss ausser M1C, °हरंति M1. — 13) त्वमुपतिष्ठते (cf. zu 1, 5, 1, 13. 2, 1) mss ausser M1C cf. MS. I, 84, 1. — 14) Zuerst hat M1 ऽनुगुपस् wie d. übr. cf. MS. I, 84, 1 ff, in der folge aber stets ऽनुगु° (ich habe hier und 1, 4, 3, 17 zu gunsten der MS. entschieden, obschon dieser nicht alles entnommen ist); तं मे corr. तन्मे d. mss. cf. zu sū 7, सप्रथ mss ausser M1C cf. zu sū 7 (*ḥ* ist um so wichtiger, als es vor *s* oft auch nicht geschrieben wird). — 15) गृहान्नुगु° M1 cf. zu sū. 14. — 16) 1. च fehlt in mss. ausser M1C (zur silbenzahl des ersten

इहैव सँस्तत्र सन्तं त्वाग्ने हृदा वाचा मनसा बिभर्मि ।

तिरो मे यज्ञ आयुर्मा प्रहासीर्वैश्वानरस्य त्वा चक्षुषोपतिष्ठे ॥

इत्युपतिष्ठते । १८ । ॥ ३ ॥

पर्वण्याग्रयणं कुर्वीत ' वसन्ते यवानां शरदि व्रीहीणाम् । १ । अग्रपाकस्येष्ट्वा नवस्याश्नीयात् । २ । सिद्धमा निर्वपणात् । ३ । आग्नेन्द्रान्निर्वपति वैश्वदेवान्द्यावापृथिवीयान् । ४ । शरदि सोमाय श्यामाकानामन्यस्यां पात्र्याम् । ५ । नानाबीजानां धर्मं विधास्यामो वषट्कारप्रदानानां चैककपालानां च । ६ । पृथगभिमर्शनं नानाबीजानाम् । ७ । गुष्येषु कर्विष्कृतमाह्वयति । ८ । आतपनप्रभृति फलीकरणान्तमैकैकस्य ' निष्पवणान्तँ यवानाम् । ९ । सिद्धमोपधानात् । १० । आग्नेन्द्राय द्वादशकपालान्युपदधात्यैकं द्यावापृथिवीयाय । ११ । सिद्धमाधिश्रयणात् । १२ । आग्नेन्द्रमधिश्रित्य वैश्वदेवं चरुमधिश्रयति । १३ । पवित्रान्तर्हिते पय आनीय तण्डुलानोप्याङ्गुष्ठपर्वमात्रं कूतीपलाशमात्रँ वा द्यावापृथिवीयमधिश्रित्य सौम्यं चरुमधिश्रयति । १४ । पवित्रान्तर्हितेऽप आनीय तण्डुलानोप्य मेक्षणेन प्रदक्षिणं चरुं श्रपयति । १५ । सिद्धमोद्वासनात् । १६ । एककपालमन्यस्यां पात्र्यामलंकुर्वन्नभिपूरयति । १७ । प्रचरणवेलायां बर्हिषि सादयित्वोपस्तीर्यैककपालँ सकृत्सर्वमवद्यति । १८ । आज्यस्यान्वासिच्य द्विरभिघार्योपांश्वेककपालेन प्रचर्य वषट्कृते मध्ये पाणिना जुहोति । ऋजुं प्रतिष्ठितमाज्येनाभिजुहोति । १९ । यदि पर्यावर्तेत ब्राह्मणव्याख्यातम् । २० । प्राक्स्विष्टकृतः षडाद्याकृतीर्जुहोति '

Pâda vgl den dritten), तेह्नि nur C तेह्न M1NS तह्ने M2B, बिभृवो corr. cf. *bibhṛhi* sû. 9 बिभवो d. mss., ज्ञातवेदाइति d. mss. offenbar nach einer bekannten regel der MS. für °द इति; °दधत्तू° so M1C °दधाति ॥ तू° M2 °दधति ॥ तू° BNS (die participialform, in ähnlichen fällen öfters gebraucht, deutet dauer oder ständigkeit der handlung an). — 17) °पतिष्ठते mss. ausser M1C. — 18) °स्थितामि Kc, यज्ञं आयुर्मा प्रहासीद्वै° Kc (*prahāsīd* wie Âp. Çr. 6, 25, 2), *iti* fehlt in M2B.

**4** (cf. MS. IV, 9, 18; Âp. Çr. 6, 29 ff.): 1) °ग्रायणं M1CGc (cf. jedoch auch Mân Gṛ. 2, 3, 10). — 4) आग्नेन्द्रा° mss ausser M1Gc cf. zu sû. 11 u. 13 — 8) °ष्कृद° (cf. Âp. Çr. 6, 29, 16) mss. ausser GcKc. — 9) निष्पवणान्तँ corr °वनान्तँ alle als folge der in C noch erhaltenen schreibweise निःपवनांतं; यवनाम् alle ausser C resp. corr. S. — 11) आग्नेन्द्राय mss. ausser M1Gc resp. corr. S cf. zu sû. 4 u. 13, °पृथिवीययोः Gc. — 13) आग्नेन्द्र° mss. ausser M1Gc resp. corr. S cf. zu sû. 4 u 11, °धिश्रृत्य M1. — 14) कूती° so M1C कूति° d. übr. — 15) चरुं mss. ausser M1CGc (hier चरु geschr., erklärt aber als चरू). — 19) cf. Âp. Çr. 6, 29, 22 ff., जुहोत्वृजु-

शतायुधाय शतवीर्याय शतोतये ऽभिमातिषाहे ।
शतं यो नः शरदो नयदिन्द्रो विश्वस्य दुरितस्य पारम् । a)

इमे चत्वारो रजसो विमाने ऽन्तरा द्यावापृथिवी वियन्तु पन्थानः ।
तेषामज्यानिं यतमो न आवहात्तस्मै नो देवाः परिदत्त विश्वे ॥ b)

वसन्तो ग्रीष्मो मधुमन्ति वर्षाः शरद्धेमन्तः सुविते दधातु ।
तेषामृतूनां शतशारदानां निवात एषामभयाः स्याम ॥ c)

संवत्सराय परिवत्सरायेदावत्सरायानुवत्सरायोद्वत्सराय कृणुता बृहन्नमः ।
तेषां वयं सुमतौ यज्ञियानां ज्योग्जीवा अहताः स्याम ॥ d)

इयं स्वस्तिः संवत्सरीया परिवत्सरीयेदावत्सरीयानुवत्सरीयोद्वत्सरीया ।
सा नः पिपर्त्वह्णीयमानेदाह्न इदाह्नमशीय (?) ॥ e)

आ नः प्रजां जनयतु प्रजापतिरिति षष्ठी । २१ । एककपालाशयस्य स्विष्टकृते समवद्यतीडायै च । २२ । यजमान इडायाः प्राश्नाति । २३ ।

एतमु त्यं मधुना संयुतं यवं सरस्वत्या अधि मनावचर्कृषुः ।
इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानवः ॥

इति यवानाम् । २४ ।

भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा ।
स नो मयोभूः पितुराविवेश शिवस्तोकाय तन्वो न एधि ॥

---

प्रतिष्ठितमाशवेनाभि° Kc. — [20]) l. ब्राह्मणो ज्या° ? cf. 1, 6, 2, 12. — [21]) a) नः corr. निः d. mss. (*naḥ* haben alle parallelen; *niḥ* lässt sich nicht vertheidigen); — b) विमाने corr. विमानो alle (*raj° vim°* «im dunstkreis» = *rajasi*), व्यंतु schreiben alle mss. wie *paryanti* 1, 7, 7, 6 u. Mān. Gr. 2, 6, 6, °ज्यानं so C °ज्यानं M1 °ज्यानं d. ubr., न fehlt in M2B, परिदत्त corr. °धत्त d. mss. (*da* und *dhā* werden sporadisch verwechselt); — c) मधुमन्ति so alle sc. wohl *parvaṇi*, एषामुभय M1; — d) °योद्विवत्सराय M1 cf. zu e), मह्नन्नमः M2, यज्ञीयानां M1; — e) स्वस्ति schreiben d. mss., °योद्विवत्स° M1 cf. zu d), °त्सरीया । corr. °त्सरीये ॥ d. mss., पिपर्त्वह्णी° corr. पिपर्तुह्रणी° M1 पिपर्तुह्णी° d. übr ; °मानेदाह्न इदा° corr. nach °मानेदाह्नेदाह्नमशीय M1 mit unregelm. krasis (= °*manā* ' *idā 'hna id āharam açīya*, wobei *aharam* = *āhāram*?), °मानेनाह्नेदह्नमशीय C (= °*mānenā 'hne 'd* etc.? und caesur?), °मानेनाह्नेनदह्नह्नम-शीय NS °मानेनाह्न[ह्न M2]नदह्नह्नमशीय M2B [Der 4. Pāda ist so verdorben, dass er nur mit hülfe einer guten parallelstelle sicher hergestellt werden könnte]. — [23]) इडाः M2BS. — [24]) यवं corr. युवं d. mss., मनावचर्कृषुः so C (geschr. °षु)

इति व्रीहीणाम् । २५ ।

अग्निः प्राश्नातु प्रथमः स हि वेद यथा कविः ।
शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥

इति श्यामाकानाँ । वसन्ते वेणुयवानाम् । २६ । वत्सः प्रथमजो दक्षिणा । २७ । बभुक्तश्यामाकेनेष्ट्वा बभ्रुं पिङ्गलँ वत्सतरं दद्याद्वसनं च । २८ । ॥ ४ ॥

आहितेषु व्यृध्यमानः पूर्वां पौर्णमासीमुपोष्याग्नये वैश्वानराय द्वादशकपालं निर्वपेत् । १ । पौर्णमास्यां ज्वलतो विसृजेत् । २ । अग्न्याधेयेन पुनराधेयँ व्याख्यातम् । ३ । विकाराननुक्रमिष्यामः । ४ । यथाम्नातं वर्षासु शरदि पुनर्वस्वोरनुराधासु वा । ५ । संभारेषु दर्भानुपोलपान्कुर्यात् । ६ । परिगीतं परिगीतँ । यत्त्वा क्रुद्धः परोवप मन्युनेति तिसृभिस्त्रिः समिन्द्धे । ७ ॥ पुनस्त्वादित्या रुद्रा वसवः समिन्धतामिति प्राक्पूर्णाहुतेः षड्गृहीतं जुहोति । ८ । आग्नेयमेव पञ्चकपालँ । विभक्तीः प्रयाजानुयाजेष्वाग्नेयावाज्यभागौ । ९ ॥ पुनरूर्जा निवर्तस्वेति पुरस्तात्प्रयाजानामाहुतिं जुहोति । १० । दक्षिणाकाले पुनरुत्स्यूतं वासो देयं । पुनर्णवो रथः पुनरुत्सृष्टो ऽनड्वान्सौवर्णशतमानिको रुक्मो ऽग्न्याधेयिकाश्च दक्षिणाः । ११ ॥ सह रय्या निवर्तस्वेत्युपरिष्टादनुयाजानां चतस्र आहुतीर्जुहोति । १२ । एकामविच्छिन्न समिन्धनीं कुर्यात् । १३ । सर्वत्रारम्भणीया सर्वत्रारम्भणीया । १४ । ॥ ५ ॥

॥ इति मानवसूत्रे प्राकसोमे षष्ठो ऽध्यायः ॥

---

मनाविचाक्रिषुः $M_1$ मनावचकृषुः N मनाग्रावचकृषुः $M_2$ मनाग्रवचकृषुः BS. — 25) मद्रांनः mss. ausser $M_2$B, समनेष्ट corr. सुमनइष्ट $M_1$ सुमनसइष्ट d. übr., °वसेन corr. °वसेम d mss, समशीमहि corr. समसीमहि d. mss., °विविश C, एहि C [von allen parallelen kommt dem Mān. Çr. selbst in den corruptelen am nächsten Kauç. 74, 19]. — 28) बभुतुत् $M_1$ बभुक्तनः C.

5 (cf. MS. I, 7, 1-5; Âp. Çr. 5, 26-29; fehlt in Gc): 1) व्यृध्यमानः mss. ausser $M_1$C, पूर्णा° $M_1$ (aber im folg. su. auch w. o.). — 5) च (st. *va*) Kc. — 7) समिंधे (समिधे $M_1$) schreiben d. mss. — 9) cf. 2, 5, 5, 24. — 11) पुनरुत्स्युतँ so $M_1$ °त्सूतं C °त्स्युतं d. ubr., पुनर्नवो NS पुनर्वा $M_2$B, °धेयिकास्य $M_1$. — 13) समिंधनीः $M_1$C (*sam*° wohl für *sam*° cf. Mān. Gṛ. p. XLIII, nach H. mit recht sc. *ahutim*).

चातुर्मास्यान्यारप्स्यमानः पूर्वां पौर्णमासीमुपोष्याग्नये वैश्वानराय द्वादशकपालं निर्वपति पार्जन्यं च चरुम्। १। अपः प्रणीयान्वसक्षेतारं मनसानुद्रुत्य जुहोति। २। धेनुरनड्वांश्च दक्षिणा। ३। सिद्धेष्टिः संतिष्ठते। ४। प्राचीनप्रवणे वैश्वदेवेन यजेत फाल्गुन्यां चैत्र्यां वसन्ते वा। ५। नोपवसथे चातुर्मास्येषु केशश्मश्रु यजमानो वापयते। ६। व्रतोपेतस्य शाखामाहृत्य वत्सानपाकरोति। ७॥ आप्यायध्वमघ्न्या देवेभ्यो विश्वेभ्यो देवेभ्यो भागमिति गाः प्रार्पयति। ८। प्रसूनः प्रस्तरः। त्रेधा संनद्धमिध्माबर्हिर्द्वौ भागौ तूष्णीं संनह्यासंनद्धं तृतीयं तदेकधा मन्त्रेण संनह्यति। तूष्णीमिध्मम्। ९। समानं दोहनम्। १०। तिसृषु दुग्धासु बहु दुग्धि विश्वेभ्यो देवेभ्यो हविरिति त्रिरुक्त्वा वाचं विसृजते। ११॥ विश्वेभ्यस्त्वा देवेभ्यो भागं सोमेनातनच्मीत्यातनक्ति। १२। सिद्धमा पात्रप्रयोजनात्। १३। बहुकपालं प्रयुनक्ति द्वितीयामाज्यस्थालीं पृषदाज्याय स्रुचं चोपभृतोऽनन्तरा। १४। सिद्धमा निर्वपणात्। १५। आग्नेयोऽष्टाकपाल इतिप्रभृतीनि पञ्च निर्वपति। मरुद्भ्यः स्वतवद्भ्यः सप्तकपालं। द्यावापृथिवीयमेककपालम्। १६। सिद्धमाधिवपनात्। १७। प्रागधिवपनाच्चरव्यानपायातयति। १८। अध्युप्य कपालान्युपदधाति। १९। प्रातर्दोहं दोहयति। २०। उत्पूतानां पूक्ते पिष्टान्यपायानयति। २१। चरुषु पिष्टभाक्तूषा सर्वत्र। २२। अनुपूर्वं हवींष्यधिश्रयति। २३। मारुतमधिश्रित्य तप्ते प्रातर्दोहे सायंदोहमानीयामिक्षां करोति। २४। एतेनामिक्षा सर्वत्र व्याख्याता। २५। आज्यं निरुप्य पृषदाज्याय दधि निर्वपति समानधर्ममाज्येन। २६। सिद्धमा स्रुचां संमार्जनात्। २७। समानं संमार्जनमुपभृतः पृषदाज्यधान्याश्च। २८। सिद्धमाज्यग्रहेभ्यः। २९।

---

1 (cf. MS. I, 2, 7. 10, 1; III, 9, 5; Âp. Çr. 8, 1 ff; 7, 12 ff.; Gc luckenhaft): 1) चातुर्मास्यानार° Kc, च fehlt in M1. — 6) °श्मश्रू mss. ausser M1CGc cf. zu 1, 4, 1, 2. — 9) प्रसूनः so alle mss. incl. Gc cf. *prasūnah* (*prasūtah* v. l.) comm. zu Katy. Çr. 5, 1, 26. — 14) स्रुवं M1, ऽनन्तरा so alle adv. = *anantaram* adv. cf. 1, 7, 8, 11. — 24) °धिकृत्य Gc. — 26) निरूप्य mss. ausser M1C, समानं M1. — 28) °धान्यश्च mss. ausser M1CKc. — 38) °न्नि-

चतुर्गृहीतान्याज्यानि पृषदाज्यधान्यां द्विरुपस्तीर्य दध्यानीय सकृदभिघारयन्पृषत्करोति । ३० । सकृदुपस्तीर्य द्विरभिघारयेद्वर्षासु । ३१ । सिद्धमाज्यानां सादनात् । ३२ । समानं सादनमुपभृतः पृषदाज्यधान्याश्च । ३३ । सिद्धमोद्वासनात् । ३४ । प्रागभिघारणादाग्निवां विवाजिनां कृत्वोत्करे वाजिनमासादयति । ३५ । अलंकृत्यानुपूर्वं हवींष्यभ्युदाहरति । ३६ । सिद्धमाभिमर्शनात् । ३७ । प्रागभिमर्शनान्निर्मन्थ्येन प्रचरति । ३८ । उत्तरस्य पश्चात्परिधिसंधेरग्नेर्जनित्रमसीत्यधिमन्थनं शकलमवस्थापयति । ३९ ॥ वृषणौ स्थ इति तत्र प्राञ्चावप्रच्छिन्नप्रान्तौ दर्भौ [निधाय] "उर्वश्यसीति तयोरुदक्कूलामधरारणिं पश्चात्प्रजननां मूलत उत्तरारणिम् ॥ आयुरसीत्याज्यस्थाल्या [आज्येन] बिले स्रेक्ष्यंस्त्रिः समनक्ति । ४० ॥ पुरूरवा असीति संदधाति । ४१ ॥ अग्नये मथ्यमानायानुब्रूहीत्यनुवाचयति । ४२ ॥ गायत्रमसि त्रिष्टुबसि जगदसीति प्रदक्षिणं त्रिरधिमन्थति । ४३ ॥ अग्नये जातायेति जाते । ४४ ॥ अग्नये प्रह्रियमाणायेति प्रह्रियमाणे । ४५ । अग्रेणोत्तरं परिधिमन्ववहृत्यान्वारब्धे यजमाने वाचयन्भवतं नः समनसाविति स्वाहाकारान्तेन प्रहृत्य शकलमग्नावध्यस्यति । ४६ ॥ अग्ना अग्निश्चरतीति स्रुवेणाभिजुहोति । ४७ । पूर्णास्रुवं सादयित्वा यजमानो चातुर्मास्यान्यभिमर्शयति । ४८ । ॥ १ ॥

सिद्धमा प्रयाजेभ्यः । १ । आश्रावं नव प्रयाजान्यजति । २ । त्रीन्हुत्वा समानयति' त्रीन्हुत्वा समानयति । द्वौ हुत्वा सर्वं समानीयैकं हुत्वात्याक्रम्यानुपूर्वं हवींष्यभिघारयत्यन्ततः पृषदाज्यं ' नोपभृतम् । ३ । सिद्धमा प्रचरणात् । ४ । उपांशु सावित्रैककपालाभ्यां प्रचरति । ५ । सिद्धमा स्विष्टकृतः । ६ । प्राक्स्विष्टकृतो "मधवे स्वाहेतिप्रभृतीनि मासनामानि जुहोति चत्वारि वैश्वदेवे ' चत्वारि वरुणप्रघासेषु ' चत्वारि साकमेधेष्वेकं शुनासीर्ये । ७ । दक्षिणाकाले वत्सः प्रथमजो दक्षिणा । ८ । सिद्धमानुयाजेभ्यः । ९ । पृषदाज्यं जुह्वामानीयाश्रावं नवानुयाजान्यजति । १० । वाजवत्योपभृता सह पृषदाज्यधानीं निगृह्णाति व्युदूह्णाति संप्रगृह्णाति निरस्यति । ११ ॥ घृताच्यौ स्थो यजमानस्य धुर्यौ पातमिति वेद्यंसयोः स्रुचौ विमु-

---

र्मन्थ्येन so alle wie auch 1, 8, 3, 3 (zu einer correctur nach 1, 5, 1, 14 liegt hier kein zwingender grund vor). — 39) °धिमंथनं so M1 °भिमंथनं NS °भिमंत्रणं M2B °ग्निमन्थनं Kc (fehlt zufällig in C). — 40) cf. 1, 5, 3, 1, प्राचावच्छि° M2BKc, [निधाय] fehlt in M1CKcP3, °क्कूलामरणिं Kc, [आज्येन] fehlt in M1CKcP3, स्नेहं C. — 45) प्रह्रिय° so einmal P3 प्रहृय° M1 प्रह्रीय° d. ubr. cf. zu 1, 4, 2, 17. 20. — 46) Zu *anvavahṛtya* cf. zu 1, 3, 1, 31. — 48) °भिमृशति mss. ausser M1C.

2 (cf. MS. III, 12, 13; Âp. Çr. 8, 2-4; Gc sehr flüchtig): 10) °आत्रपन् M2B. — 11) वाजवत्योप° mss. ausser Gc; in

श्नति। १२। स्रुचि चमसे वाजवैरूर्ध्वस्तिष्ठन्बर्हिरनुविषिञ्चन्वाजिनं गृह्णाति। १३॥ वाजिभ्यो ऽनुब्रूही-त्यनुवाचयति। १४। आश्राव्य "वाजिनो यजेति प्रेष्यति। १५। वषट्कृतानुवषट्कृते हुत्वोच्छेषेण दिशः प्रतियजति "दिशः स्वाहेति दिक्षु पूर्वार्धादुपक्रम्य प्रदक्षिणं 'पञ्चमेन मध्ये' षष्ठेन पूर्वार्धे। १६। शेषं समधा विभज्योपहूतोपह्वयस्वेत्युक्त्वोपहूता उपह्वयध्वमिति वा। १७।

आ मा विशन्त्विन्दव आ गल्दा धमनीनाम्।
रसेन मे रसं पृण 'वाजिनो मे यज्ञं वहानि॥

इत्यृत्विजः प्राश्नन्ति यजमानश्च। होता प्रथमो भक्षयते। १८। सिद्धमा समिष्टयजुषः। १९। द्विर्ध्रुवामा-प्याय्यैषं ते यज्ञो "देवा गातुविद इति द्वे समिष्टयजुषी जुहोति। २०॥ संवत्सरीणां स्वस्तिमाशास इत्याह यजमानः। २१। सिद्धेष्टिः संतिष्ठते। २२। सद्यः पौर्णमासेनो संस्थाप्य '

ऋतमेव परमेष्ठ्यृतं नात्येति किंचन।
ऋते समुद्र आहितः समुद्रेण पृथिवी दृढा॥ a)
अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा।
शिरस्तपस्याहितं वैश्वानरस्य तेजसि॥ b)
ऋतेनास्य निवर्तय सत्येन परिवर्तय [तपसास्यानुवर्तय]।
शिवेनास्योपवर्तय [शग्मेनास्याभिवर्तय]॥ c)

इति त्रिश्येतया शलल्या लोहायसेन क्षुरेण निवर्तयति केशान्वपति श्मश्रूणि। २३॥ तदृतं तत्सत्यं

---

der reihenfolge निरस्यति संप्रगृह्णाति mss. ausser C. — 12) धुर्यां corr. धुर्या d. mss. cf. zu 1, 3, 4, 28, स्रुचा M2BC. — 13) °र्यूर्ध-तिष्ठ° mss ausser M1CGc, °नुषिंचन्वा° mss. ausser M1 cf. Âp. Çr. 8, 3, 6. — 18) 1. मे fehlt in M2B, पृणं M2BC, वहानित्यृत्विजः M1C. — 19) Man verlange nicht °यजुर्भ्याम् wegen des folg. sû. u. 1, 7, 4, 32 ff. — 23) पौर्ण-मासं mss. ausser M1CGcKc cf. zu 1, 7, 4, 51. 7, 15. 8, 8; — a) ऋतमिव mss. incl. Gc ausser M1, die mss. schreiben परमेष्ठीऋतं NS परमे-ष्ट्यृतं M2B परमेष्ठ्यृते M1C; — c) (die mss. ausser M1C stehen unter dem einfluss von Âp. Çr. 8, 4, 2) निवर्तये NS, परिवर्तये mss. ausser M1C, [तपसा°] fehlt in M1C, °नुवर्तय corr. im einklang mit dem übrigen °नुवर्तये d. betr. mss. nach Âp. Çr. l. c., °पवर्तये mss. ausser M1C, [शग्मेना°] fehlt in M1C; °भिवर्तयेति so hier die mss., die sonst die 1. person haben (wohl nicht krasis für °*ye* + *iti* cf. Mān. Gṛ. Einl. § 8 kζ); — त्रिःश्येतया C त्रिःश्वेतया Kc cf. aber auch Man. Gṛ. 1, 12, 2. 15, 1. —

तञ्शकेयं तेन शकेयं तेन राध्यासं तन्मे राध्यतामिति जपति यजमानः । २४ । चतुरो मासान्न मांसमश्नाति न स्त्रियमुपैति नोपर्यास्ते । जुगुप्सेतानृतात् । प्राक्शेते । मध्वश्नाति । ऋतौ भार्यामुपैति । २५ ।   ॥ २ ॥

वरुणप्रघासाश्चतुर्षु मासेषु । १ । वैश्वदेविकं विधानम् । २ । पञ्च संचराणाम् । ३ । मारुत्यै प्रतिप्रस्थाता वत्समानपाकरोत्यध्वर्युर्वारुण्यै । ४ । पृथगिध्माबर्हिषी संनह्यतः । सकृत्संनद्धं प्रतिप्रस्थाता । ५ । यथाकालं पृथग्दोहयतः । ६ । सिद्धमा पात्रप्रयोजनात् । ७ । पृथक्पात्राणि प्रयुनक्ति स्रुवप्रथमाः स्रुचः प्रतिप्रस्थाता द्वे चरुस्थाल्यौ स्फ्यं वेदं च । ८ । सिद्धमा निर्वपणात् । ९ । पञ्च संचराणि निरुप्याध्वर्युरैन्द्राग्नं द्वादशकपालं निर्वपति कायमेककपालम् । १० । यथाकालमामिक्षे पृथक्संपादयतः । ११ । सिद्धमाभिवासनात् । १२ । पिष्टलेपं निधायाग्रेणाहवनीयं त्रिषु प्रक्रमेषु परिमिते वावकाशे पृष्ठ्याशङ्कुं निहत्य वेदादानप्रभृति वेदिं विदधाति शम्यां प्राचीं चतुःशयां पञ्चत्रिंशयां पुरस्तात् । १३ । पूर्वार्धे वेद्या वितृतीयमात्रे ऽरत्निमात्रीं चतुर्दिष्टिमुत्तरवेदिं विदधाति । १४ । अग्रेणोत्करं प्रक्रममात्रे वेदेरुद्धत्यावोक्ष्य चात्वालं शम्यया परिमिमीते तप्तायनी मे ऽसीति दक्षिणतो वित्तायनी मे ऽसीति पश्चाद्देवतान्मा नाथितमित्युत्तरतो ऽवताद्व्यथितमिति पुरस्तात् । १५ ॥ अग्ने अङ्गिर इति पुरस्तात्प्रत्यङ्मुखश्चात्वालं स्फ्येनाभिहन्ति । १६ ॥ आयुना नाम्नेहीति पांसून्पाणौ कुरुते । १७ ॥ वसवस्त्वा हरन्त्विति प्रभृतिभिः प्राङ्मुख उत्तरवेद्यां निवपति ॥ यो द्वितीयस्यामिति द्वितीयं यस्तृतीयस्यामिति तृतीयम् । समानमन्यत् । तूष्णीं चतुर्थम् । १८ ॥ विदेरग्ने नभो नाम यत्त इति जानुदघ्नमृजुं चतुरस्रं खात्वोत्तरवेद्यां निवपति । १९ ॥ सिंहीरसि महिषीरसीत्युत्तरवेदिं करोति । २० । तस्यां मध्ये प्रादेशमात्रीं चतुरस्रां नाभिं करोति । २१ ॥ देवेभ्यः शुन्धस्वेत्यद्भिरवोक्षते । २२ ॥ देवेभ्यः शुम्भस्वेति सिकताभिः प्ररोचयति । २३ ॥ आपो रिप्रं निर्वहतेति नाभेरधि प्रागुदीचीरपो निःसारयति । २४ । प्रतिप्रस्थाता दक्षिणां वेदिं करो-

---

24) तञ्शकेयं so M1C wohl unter einfluss von MS. IV, 137, 8 तच्छकेयं M2B तन्शकेयं NS, तेन शकेयं fehlt in M2B. — 25) प्राक्ते (= *prāk çete*) C, मधुनाति (st. *madhv açn°*) mss. ausser M1C.

3 (cf. MS. I, 2, 8. 6, 2; III, 8, 5; Âp. Çr. 8, 5; 7, 3-7; Gc recht lückenhaft): 3) (sc. *vidhānam* vgl. Âp. Çr. 8, 5, 3 mit 8, 2, 2 u. 3), संवत्सराणां M2B cf. zu sū. 10. — 8) द्वचरुस्थाल्यौ mss. ausser M1Gc. — 10) संवत्सराणि M2B cf. zu sū. 3, निरूप्य mss. ausser M1C. — 11) संपातयतः M1C. — 13) पृष्ठ्या° M1CS (zur obigen richtigen form vgl. 2, 2, 1, 52. 2, 9. 12. 3, 6, 13), in Kc पृष्ठ्याशंकु v. l. cf. Weber Ed. zu Kāty. Çr. 5, 3, 9; वस्त्रादानप्रभृति Kc. — 14) °मात्रेऽरत्नि° mss. ausser M1C, चतुर्दिष्टिमु° so alle incl. Kc (hier चातु° v. l.) cf. Kauç. 50, 7; 85, 2; विधाय Kc. — 22) °वोक्षति mss. ausser M1C. — 24) °दीचीस्त्ररपो mss. ausser

त्योत्तरस्मात्परिग्रहादरत्निमात्रमन्तरा । २५ । समे प्राची भवतः । यथा हवींषि संभवेयुस्तथा तिरश्चि । २६ । एक उत्करः । २७ । अपरेणोत्तरां स्तम्बयजुर्हरति । २८ । प्रोक्षणीः संस्कृत्यैन्द्रघोषास्त्वा पुरस्ताद्वसुभिः पात्विति प्रभृतिभिः प्राङ्मुख उत्तरवेदिं प्रोक्षति प्रदक्षिणमुत्तरैरनुपरिक्रामन् । २९ । प्रतिपरिक्रम्य " पितॄणां भागधेयीः स्थेति शेषं दक्षिणात उत्तरवेदेर्निनयति । ३० । हिरण्यमन्तर्धाय पञ्चगृहीतेन नाभिं व्याघारयति " सिंहीरसि सपत्नसाही स्वाहेति प्रभृतिभिर्दक्षिणेंऽसे सव्यायाँ श्रोणौ दक्षिणायाँ श्रोणौ सव्ये ऽंसे ' मध्ये पञ्चमम् । ३१ ॥ भूतेभ्यस्त्वेत्यूर्ध्वां स्रुचमुद्गृह्णाति । ३२ । आहवनीये ऽग्निप्रणयनानि प्रत्याधत्तः । ३३ । नाभिं पीतदारवैः परिदधाति ॥ विश्वायुरसीति मध्यमं " ध्रुवक्षितिरसीति दक्षिणमच्युतक्षिदसीत्युत्तरम् । ३४ ॥ अग्नेर्भस्मास्यग्नेः पुरीषमसीति संभारान्निवपति पूतदारुगुग्गलकेरुसुगन्धितेजनं वृष्णेरलूनपूर्वस्यान्तराशृङ्गाद्दूर्णास्तुकम् । ३५ ॥ विभ्राड्बृहत्पिबत्विति संभारानभिमृशति । ३६ । चात्वालादुपयमनीः कुरुते ' वेदिपुरीषात्प्रतिप्रस्थाता । ३७ ॥ अग्नये प्रणीयमानायानुब्रूहीत्यनुवाचयति । अग्निभ्यां वा । ३८ । त्रिरनूक्तायामग्निप्रणयनान्युद्यच्छतः । ३९ । अधर्युराग्नीध्राय प्रदाय

यत्ते पावक चकृमा कच्चिदागः पूर्वो यः सन्नपरो भवासि ।
घृतेन त्वं तन्वं वर्धयस्व मा मा हिंसीरधिगतं पुरस्तात् । स्वाहा ॥

इति शेषे जुहोति । ४० । अग्निप्रणयनान्यादाय " प्राचीमनु प्रदिशं प्रेहि विद्वानिति हरतः । ४१ ॥ ऊर्णावन्तमित्युच्यमाने

यज्ञः प्रत्यु ष्ठात्सुमतौ मतीनां यत्रावहन्ति कवयः पुरूणि ।
दीर्घमायुर्यजमानाय विन्दाथासीदस्व महते सौभगाय ॥

इति संभारेष्वग्निं निदधाति । अवोद्य प्रतिप्रस्थाता समया दक्षिणस्याः पूर्वार्धे । ४२ ।

---

M1C. — 25) करोत्युत्त° mss. ausser M1C. — 26) प्राची so alle incl. Kc wie Âp. Çr. 8, 5, 4; तिरश्च्यक löse ich auf w. o. तिरश्चीएक Kc (cf. Web. Ed. zu 5, 3, 11) तिरश्चेक für *tiraçcā eka?*) M2B. — 28) अपरेणोत्तरवेदिं Kc zu Katy. Çr. 5, 3, 11, zu ib. su. 18 aber w. o. — 29) °नुपरिक्रामति (st. °*krāman prati*) M2B. — 31) °दक्षिणेअंसे M1C, सव्येअंसे C. — 34) पीतदारवैः so M1 wie an einer stelle nach Weber's Sammlung auch das Kāṭhaka Sutra पूत° CP3 प्रेतु° M2B पूतपूत° NS. — 35) गुग्गुलु GcP3 cf. aber auch Mān. Gṛ. 2, 14, 23, °र्णास्तुकं M2B. — 40) भवासि corr. nach Âp. Çr. 7, 6, 5 भवाअसि d. mss. (für भवाँ असि = bhavān asi??). — 41) हरतः so dual cf. sū. 33 u. 39 (sonst könnte *harata ūrṇ°* auch = *harate ūrṇ°* sein (cf. हरति P3). — 42) प्रत्युष्ठात् so N, प्रत्यष्ठात् Gc wie Âp. Çr. 7, 6, 7 (fehlerhaft für *praty u ṣṭhāt* oder *praty asthāt*), प्रत्युश्ठात् d. übr. (cf. *pratitiṣṭha* TBr. 2, 5, 8, 12 u. Âp.

मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि ।
अग्ने मनुष्वदङ्गिरो देवान्देवायते यजमानाय स्वाहा ॥

इति समिधावादधतः । ४३ ॥ अग्नेः कुलायमसीति दक्षिणात आहवनीयस्योपयमनीर्निर्वपति । ४४ । उलपराजिभ्यामाहवनीयौ परिस्तीर्य " सप्त ते अग्ने समिध इति पूर्णाहुती जुहुतः । ४५ । प्रतिप्रस्थाता दक्षिणस्या वेदेरुत्तरस्याः श्रोणेरधि स्फ्येन सकृत्संभिनत्त्योत्तरस्या दक्षिणस्मादंसात् । ४६ । पृथक्कर्माणि कुरुतः । ४७ । अध्वर्युः प्रैषानाह । ४८ । पिष्टलेपौ निनीयोत्तरौ परिग्राहौ परिगृह्णीतः । ४९ । सिद्धमाज्यग्रहेभ्यः । ५० । चतुर्गृहीतान्याज्यानि पृषदाज्यवन्ति गृह्णाति । ५१ । सिद्धमाज्यानां सादनात् । ५२ । ॥ ३ ॥

उत्तरतो गार्हपत्यस्य प्रतिप्रस्थातामयवपिष्टानां दध्ना करम्भपात्राणि करोत्येकोद्धीन्यङ्गुष्ठपर्वमात्राणि यावन्तो ऽमात्या यजमानस्यैकं चाधिकम् । १ । शमीपर्णैः पूरयित्वा शूर्पे निदधाति । २ । मेषं कृत्वा मेषीं करोति यावन्ति पुंल्लिङ्गानि शकोरंस्त्रीलिङ्गानि मेष्याः प्रतिप्रस्थाता । ३ । प्रत्नाल्पोर्णाः श्लेषयतः । ४ । परःशतानि परःसहस्राणि चाग्रतः शमीपर्णानि निवपतः । ५ । विस्राव्यामिक्षे पात्र्योरवधत्तः । ६ । वारुण्यै निष्काषं शिष्ट्वा पयस्ययोः करीरसक्तूनावपतः । ७ । मारुत्यां मेषमवदधाति ' वारुण्यां मेषीम् । ८ । आसादयन्तौ विपरिहरत ऐन्द्राग्नपष्ठान्युत्तरस्यां ' मारुतीं प्रतिप्रस्थाता दक्षिणस्यां ' वारुण्येककपालावुत्तरस्याम् । उभयत्र निर्मथ्यः । ९ । सिद्धमा संमार्जनात् । १० । संमृष्ट उत्तरस्मिन्प्रतिप्रस्थाता गार्हपत्यान्ते पृच्छति " पत्नि कति ते कान्ता यदि मिथ्या वक्ष्यसि प्रियतमस्ते संस्थास्यतीति । यं

---

Çr. l. c.). — 43) मनुष्वत्त्वा corr. °त्ता d mss, समिधावादधतः so alle mss. ausser समिधमादधाति $P_3$ cf. zu 1, 6, 3, 16. — 44) °र्निर्वपति mss. ausser S$P_3$ cf. Schwab p. 31 ff. 36. — 49) पिष्टलेपं mss. ausser $M_1$; *parigrāhau* so hier und in der folge, mit kurzem *a* dagegen o. sū. 25. — 50) समिद्धमा° $M_2$B

4 (cf. MS. I, 10, 2. 3, 39; Âp. Çr. 8, 5-8; Gc ganz lückenhaft): 1) °स्थातामवय° $M_2$B °स्थातामवयव° NS (°स्थाताआमयव° schreiben die übr. incl. GcKc), करम्भपात्राणि fehlt in $M_2$B, °कोद्धीन्य° so C °कोधोन्य° $M_1$ °कोद्धिनि Gc °कोर्धान्य° Kc °काद्यानि $P_3$ °काद्धेन्यि° NS °काद्धेन्यि° (?) B °काद्धान्य° $M_2$ (*ekoddhīni* nach Gc = *çarāvākṛtīni*). — 3) च Kc nach *meṣīm*, मेष्या (st. *meṣyāḥ*) mss. ausser $M_1$Kc. — 4) °र्णामाम्ले° mss. ausser $M_1$CKcGc, °यंतः $M_1$. — 6) विश्राव्य° C cf. विश्रामिते Gc. — 7) पयस्ययोःकरी° so C पयस्योःकरी° $M_1$ पयस्योऽकरी° d. übr. — 9) सादयंतौ (st. *āsād*°) mss. ausser $M_1$C, °षष्ठान्यु° $M_1$ cf. zu sū. 21, मारुत्यै mss. ausser $M_1$, निर्मथ्यः so Gc °थ्यं C

निर्दिशेत्तँ वरुणो गृह्णात्विति ब्रूयात् । ११ ॥ प्रघास्यान्हवामह इति पत्नी । १२ । करम्भपात्राण्यादायापरेण विहारं दक्षिणातिक्रम्यायेण दक्षिणमग्निं पुरस्तात्प्रत्यञ्चाववतिष्ठेते शूर्पं शिरसोरवधाय । १३ ॥ मो षू ण इन्द्रेति जपति यजमान उत्तरतस्तिष्ठन् । १४ ॥ यद्ग्रामे यदरण्य इति जुहुतः शूर्पेण करम्भपात्राणि । १५ ॥ अक्रन्कर्म कर्मकृत इति व्युत्क्रामतः । १६ । संमृष्टे दक्षिणास्मिन्निध्मा प्रवरात् । १७ । अध्वर्युः प्रवृणीते । १८ । सिध्मा प्रचरणात् । १९ । आज्यभागाभ्यां प्रचर्योपास्ते प्रतिप्रस्थाता । २० । अध्वर्युरैन्द्राग्नषष्ठैः प्रचरति । २१ । मारुत्यै प्रतिप्रस्थाता संप्रेष्यन्प्रचरति । २२ । तस्याः पूर्वेणावदानेन सह मेषीमवद्यत्यध्वर्युरुत्तरेण वारुण्या मेषम् । २३ । एककपालेन प्रचर्य मासनामानि जुहोति । २४ । उभयत्र स्विष्टकृत्समानीयेडाम् । २५ । मिथुनौ गावौ दक्षिणा । २६ । सिध्मा वाजिनात् । २७ । उभौ वाजिभ्यां प्रचरतः । २८ । शेषे समानीय भक्षयन्ति । २९ । सिद्ध पत्नीसंयाजेभ्यः । ३० । अध्वर्युः पत्नीः संयाजयति । ऊढेन पत्नी वेदयोर्वाचयति । ऊढेन यजमानो ऽनुमन्त्रयते । ३१ । सिध्मा समिष्टयजुर्भ्यः । ३२ । त्रिर्ध्रुवामाप्याय्य '' यज्ञ यज्ञं गच्छ'' ते यज्ञो '' देवा गातुविद इति त्रीणि समिष्टयजूंषि जुहोति ' दक्षिणास्मिन्प्रतिप्रस्थाता । ३३ । आज्यशेषे समानीय स्रुक्स्रुवावाज्यस्थालीमादत्ते प्रतिप्रस्थाता ' तुषनिष्काषमाग्नीध्रः ' स्रुचमध्वर्युः । ३४ ॥ उरुं हि राजा वरुणश्चकारेति चात्वालात्प्रयन्तो जपन्ति । ३५ ॥ शतं ते राजन्नित्यपः परादृश्य तिष्ठन्तो ऽवभृथे प्रचरन्ति । ३६ । स्थावरासु तृणं प्रास्याप्सु जुहोति । ३७ ॥ अग्नेरनीकमिति चतुर्गृहीतस्य स्रौचमाघारमाघारयति । ३८ । अपबर्हिषः प्रयाजानुयाजान्यजति । ३९ । आज्यभागाभ्यां प्रचर्य तुषनिष्काषस्यावदाय वरुणं यजति ' शेषेणाग्नीवरुणौ स्विष्टकृत्स्थाने । ४० । तदन्ता संतिष्ठते । ४१ ॥ विचृत्तो वरुणस्य पाश इत्यपो ऽन्नाद्धिष्यन्ति ॥ प्रत्यस्तो वरुणस्य पाश इति प्रत्यस्यन्ति ॥ नमो वरुणस्य पाशायेति नमस्कुर्वन्ति । ४२ ॥ धाम्नो धाम्न इति तिसृभिः परागोष्ठं मार्जयन्ते । ४३ । अनपेक्षमाणाः प्रत्यायन्ति । ४४ ।

---

°ष्य d. übr. — 11) वतासि mss. ausser C; das citat केन जारेण सह त्वं चरसीति मानवे Kc bezieht sich offenbar nicht auf diese stelle. — 13) °वतिष्ठता (= °ष्ठतः od. °ष्ठते?) mss. ausser M1CGc; *avadhāya* wie 2, 5, 4, 4 = *adhinidhāya* Âp. Çr. 8, 6, 23. — 21) °षष्ठैः M1 cf. zu sû. 9. — 23) वारुण्यां C. — 30) सिद्ध (ohne *ā*) so alle hier wie auch 1 8, 6, 14. — 31) पत्नी वेद° corr. पत्नीर्वेद° (unmöglich, wohl aus पत्नीँ'विद° entstanden) M1 पत्नीर्वेद° (schwer möglich) d. übr. — 34) स्रुक्स्रुवानाज्य° M1 °स्रुवमाज्य° Kc, *ājyasthālīm* sc. *ca* cf. zu 1, 2, 1, 18, °लोमाधत्ते C, °निष्काम° M2B cf. jedoch sû. 7 u. 40. — 35) प्रत्यंता (für *pratiyanto*? cf zu 1, 6, 4, 21b) NS, वाचयति (st. *cātv° pray° jap°*) Kc. — 38) स्रौवमाघारयति Kc. — 39) प्रयाजान्यजति mss. ausser M1Kc cf. 1, 7, 6, 26. — 40) तुषनिष्काम° mss. ausser M1CKc cf. sû. 7 u. 34, वारुणं M1, यजेति Kc. — 41) °ष्ठते M1. — 42) विवृत्तो M2BC, इत्यपो bis पाश fehlt in M2B, °द्दिश्यन्ति schreiben NS,

अत एव समिधावाहरन्ति । ४५ ॥ एधो ऽस्येधिषीमहीति समिधमादधाति ॥ समिदसि समेधिषीमहीति द्वितीयाम् । ४६ ॥ अपो अद्यान्वचारिषमित्युपतिष्ठन्ते । गार्हपत्ये तूष्णीं पत्नी । ४७ । बर्हिषो अनुप्रहरतः । ४८ ॥ परिवत्सरीणां स्वस्तिमाशास इत्याह यजमानः । ४९ । सिद्धेष्टिः संतिष्ठते । ५० । सद्यः पौर्णमासीं संस्थाप्य ।

यद्धर्मः पर्यावर्तयन्नन्तात्पृथिव्या अधि ।
तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ॥ ५१ ॥

अग्निस्तिग्मेन शोचिषेतिप्रभृति समानम् । ५२ । ॥ ४ ॥

साकमेधाश्चतुर्षु मासेषु । १ । पूर्वां पौर्णमासीमुपोष्याग्नये ऽनीकवते प्रातरष्टाकपालं निर्वपति । २ । सिद्धेष्टिः संतिष्ठते । ३ । न बर्हिरनुप्रहरति । ४ । गृहमेधीये तूष्णीकमाज्यभागाभ्याम् । पलाशशाखया सर्वान्वत्सानपाकरोति । ५ । मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुः । ६ । तद्बर्हिर्यदनीकवतस्य । ७ । सिद्धेष्टिः संतिष्ठते । ८ । बर्हिरनुप्रहरति । ९ । गृहमेधीयायेध्माबर्हिः संनह्यत्यृते प्रस्तरपरिधीन् । १० । हुते सायमग्निहोत्रे मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्ध ओदनं श्रपयति । ११ । अपवित्रे दोहयति । १२ । आज्यं निर्वपति । १३ । इध्माबर्हिरुपसादयति । १४ । स्रुक्स्रुवं संमार्ष्टि । १५ । पत्नीं मन्त्रेणोपस्थापयति । १६ । इध्माबर्हिः प्रोक्ष्याहवनीयं परिस्तीर्येध्मदारुभिः परिदधाति । १७ । शिरोनिष्कासं निदधाति । १८ । उपस्तीर्य त्रीनोदनानुद्धरति । १९ । उत्पूतानलंकरोति । २० । पश्चादाहवनीयस्योदीचो निदधा-

---

प्रत्यस्यति M1 प्रत्यस्येति C — 43) Zu 43 ff. cf. Mān. Gṛ. 2, 1, 11 ff; 2, 17, 5 ff.; पराग्गोष्ठं M1. — 44) अनवेक्ष° mss. ausser M1C. — 45) °हरति C (Gc, der auch w. o. liest, erklärt: *samidhāv iti pratyekasambandhaḥ*, also für jedes feuer zwei). — 46) Zu 46-48 cf. Mān. Gṛ. 2, 2, 25 ff. 29. — 47) °न्वचार्षमि° M1C. — 51) cf. 1, 7, 2, 23. 7, 15. 8, 8; पर्यवर्तय° mss. ausser M1C.

5 (cf. MS. I, 10, 1 ff.; Âp. Çr. 8, 9-12; Gc ganz lückenhaft): 2) पूर्णा° M1. — 5) गृहमेधीयाय NS, तूष्णीं NS [कमाज्यभागाभ्याम् fehlt in N und ist in S eingeklammert; *ājyabh°* ist natürlich = *ā ājy°* cf. hier bis sū. 22 resp. Mān Gṛ. 2, 2, 1-13, und *tūṣṇīkam* auch beim folgenden zu ergänzen cf. Âp. Çr. 8, 9, 11; statt des für das Mān Çr verdächtigen *tūṣṇīkam* ist vielleicht तूष्णीं कर्मा° zu lesen]. — 10) °परिधी M1C. — 11) गृहमेधिभ्यः M2BKc. — 16) fehlt zufällig in C, पत्नी mss ausser NS, मंत्रेणोपयतीध्मा° M1 — 17) °ध्मादारुभिः M1. — 18) शिरा° so alle mss. wie auch sū. 29 (*çiro-niṣkāṣa* = *çara* Âp. Çr. 8, 10, 7), °निष्कासं

त्याज्यं च । २१ । इध्ममुपसमाधायाज्यभागाभ्यां प्रचर्य सर्वेषाँ समवदायाभिघार्य " मरुद्भ्यो गृहमेधेभ्यो ऽनुब्रूहीत्यनुवाचयति । २२ । आश्राव्य " मरुतो गृहमेधान्यजेति प्रेष्यति । २३ । अनिरुक्तः स्विष्टकृत् । २४ । दक्षिणास्मिन्समवदायेडामुपहूय भक्षयन्ति । २५ । आज्याभ्यक्तस्य गृहमेधीयस्य सुहिता भवन्ति । २६ । अपि प्रतिवेशो ऽन्य ओदनः । तस्यामात्याः सुहिता भवन्ति । २७ । सवत्सा गावो वसन्त्यृते ऽभिवान्यायाः । २८ । पुरा प्रातरग्निहोत्राद्गार्हपत्ये "पूर्णा दर्वे " देहि म इत्येताभ्यां शिरोनिष्कासस्य पूर्णदर्वमृषभमाहूय रुवति जुहुयात् । २९ । यद्यृषभो न रुयाद्ब्राह्मणमामन्त्र्य जुहुयात् । ३० । हुते प्रातरग्निहोत्रे मरुद्भ्यः क्रीडिभ्यः साकं रश्मिभिः सप्तकपालः । उद्यत्सु रश्मिषु प्रचरति । ३१ । आग्नेयो ऽष्टाकपाल इतिप्रभृतीन्यष्टौ वैश्वकर्मणान्तानामुत्तरवेद्यामतिप्रणीयस्यथा वरुणप्रघासेषु । ३२ ॥ अग्ने वेर्होत्रमिति चतुर्गृहीतस्य स्रौचमाघारमाघारयति । ३३ । प्राक्स्विष्टकृतो मासनामानि जुहोति । ३४ । ऋषभो दक्षिणा । ३५ । ॥ ५ ॥

प्राग्दक्षिणाचाराः पितृयज्ञेन चरन्ति । १ । उपमूलं बर्हिर्दान्त्यन्यत्प्रस्तरात् । २ । भूय इध्माबर्हिः संनह्यापरौ परिस्तीर्यैकैकं पात्राणि प्रयुनक्त्यन्यत्प्राशित्रहरणात् । ३ । दक्षिणतःपुरस्ताद्दक्षिणाग्नेः प्रणीताः सादयति । ४ । दक्षिणाग्नौ निष्टपति । ५ । दक्षिणतो ऽग्निष्ठान्निर्वपति । सोमाय पितृमते षट्कपालं । पितृभ्यो बर्हिषद्भ्यो यवान्धानाभ्यः । पितृभ्यो ऽग्निष्वात्तेभ्यो यवान्मन्थाय । ६ । सिद्धमाधिश्रयणात् । ७ । भृज्यमानासु पर्यग्निं करोति । ८ । धानानामितरार्धं मन्थाय पिनष्टि । ९ । सिद्धमाभिवासनात् । १० । पिष्टलेपं निधायाग्रेण दक्षिणमग्निं त्रिषु प्रक्रमेष्वपरिमिते वावकाशे पुरुषमात्रीं चतुरस्रां दिक्कोष्ठां वेदिं क-

---

M2B (aber sū. 29 auch diese w. o.). — 19) त्रीनोदनान्° corr cf. *udīco* sū. 21 u *odanaḥ* sū. 27 त्रीणोदनान्यु° d. mss. (wohl eine folge der möglichen schreibweise त्रीणोदनान्° mit *ṇ* st. *n* cf. Âp. Çr. 2, 11, 3 vgl. mit Mān. Çr. 1, 2, 6, 24; 1, 8, 5, 18). — 20) उत्पूतान° corr. cf. zum vorhergeh. sū. u. Âp. Çr. 8, 10, 9 उत्पूताद° d. mss. (hervorgerufen durch das vorausgeh. *uddharati*). — 21) cf. Mān Gṛ. 2, 4, 9 — 27) अप्रतिवेशो M1C (st. *api pr°*; cf. aber auch Âp. Çr. 8, 10, 10 11, 11), न्योदनः M1 mit krasis. — 29) दर्वे so M1 दर्वि C दर्वो d. übr, zu शिरो° cf. zu sū. 18, पूर्णादर्व° M1. — 30) ह्वयाद् M1 wie Âp. Çr. 8, 11, 20. — 33) अग्ने वेर्हो° NS अग्नेर्हो° M2B.

**6** (cf MS. I, 10, 3. 19; Âp. Çr. 8, 13-16; Gc unvollständig): 1) °चारः M1. — 2) *dānti* so alle incl. Gc cf. v. l. MS. I, 157, 10; nach Gc ist *anyat pr°* mit dem folg., oder aber *anyat* mit dem vorherg. u. *prast°* mit dem folg. zu verbinden. — 3) *apareṇa* (st. °*rau*) Kc v. l., die Weber zu Kāty. Çr. 5, 8, 20 vorzieht cf. aber 1, 7, 5, 17. — 4) पश्चाद् (st. *purastād!*) M1 (w. o. aber auch Kc), आसादयति M1 (w. o. auch Kc). — 6) ऽग्निभृष्टान्नि° (st. ऽग्निष्ठान्नि°) Kc. — 8) पर्यग्नि Kc. —

रोति । ११ । अोत्तरस्मात्परिग्राक्षात्परिश्रयति । १२ । उत्तरां प्रति श्रोणिं द्वारं करोति । १३ । दक्षिणाग्नेरेकोल्मुकमभ्युद्दृत्य मध्ये वेदेर्निधाय तस्मिन्नुपसमाधाय परिसमुह्य पर्युक्ष्य विष्टलेपं निनीयोत्तरं परिग्राहं परिगृह्णाति । १४ । सिद्धमाज्यग्रहेभ्यः । १५ । चतुर्गृहीतान्याज्यानि गार्हपत्यान्ते गृह्णाति । १६ । सिद्धमा स्तरणात् । १७ । उद्धूय बर्हिः स्तृणाति । १८ । प्रसव्यमुद्धावं त्रिः परिस्तीर्योद्धवात्प्रस्तरं तूष्णीं गृह्णाति । १९ । अभिवान्यायाः पयसो ऽर्धपात्रे प्रसव्यमिक्षुशलाकया मन्थमायौति शलाकास्थम् । न शलाकामुद्धरति । २० । अलंकृत्यैकैकमभ्युदानयत्युदकुम्भमाज्यानि हवींषि । तथापराणि यज्ञाङ्गानि । २१ । सिद्धमा समिन्धनात् । २२ । एका सामिधेनी । तस्यास्तृतीये प्रणवे सकृदिध्ममादधाति । २३ । सिद्धमा प्रवरात् । २४ । न प्रवृणीते । २५ । अपबर्हिषः प्रयाजानुयाजान्यजति । २६ । आज्यभागाभ्यां प्रचर्य विस्रंस्य यज्ञोपवीतानि प्राचीनावीतानि कुर्वन्ति । २७ । विपरिक्रामन्त्यृत्विजो यथास्थानम् । होतायेणातिप्रणीतं परिक्रम्योपविशत्युत्तरतो ब्रह्मायेण होतारमधर्युरपरेण । २८ । आग्नीध्रो विपरिहरति हवींषि । २९ । यथास्थानं जुहूर्मध्य उपभृद्ध्रुवा दक्षिणा । यथास्थानं पुरोडाशो । मध्ये धाना । मन्थो दक्षिणतः । ३० । पञ्चकृत्वो ऽवद्यति । षट्कृत्वो जामदग्न्यस्य । ३१ । अपरेण स्रुग्दण्डानुदङ्ङतिक्रम्य " सोमाय पितृमते ऽनु स्वधेत्यनुवाचयति ॥ श्रौं स्वधेत्याश्रावयति ॥ अस्तु स्वधेति प्रत्याश्रावयति । ३२ । प्रत्याश्रुते " सोमं पितृमन्तं स्वधेति प्रेष्यति । ३३ ॥ स्वधा नम इत्युक्ते दक्षिणा तिष्ठन्मध्ये जुहोति । ३४ । एवं धानाभिः प्रचरत्येवं मन्थेन । ३५ । अग्नये कव्यवाहनाय स्विष्टकृते समवद्यति द्विः । त्रिर्यदि पञ्चावदानस्य । ३६ । असंसक्तां दक्षिणार्धपूर्वार्धे जुहोति । ३७ । प्रतिपरिक्रम्य विस्रंस्य प्राचीनावीतानि

---

11) अन्वाहार्यपचनं (im versehen nach Âp. Çr. 8,13,2) neben दक्षिणाग्निं (st. einfach *dakṣiṇam agnim*) Kc, पुरुषमात्रां Kc; दिक्कुष्टां corr. (cf Âp. Çr. l. c. 2 u. 3), दिकुष्टां M1, दिक्काष्टां nebst v. l. दिक्काष्टां mit nachfolg. चतुरश्रां Kc, दिक्कुष्टां d. ubr. — 12) उत्तर° M2B, °ग्रक्षा° M1C (aber sū. 14 auch diese °*grā*°). — 14) परिसमूह्य mss. ausser M1C. — 19) cf. zu 1, 1, 2, 10. — 20) cf. Mān. Gṛ. 2, 1, 5, अभिधान्यावत्सायाः (st. *abhivānyāyāḥ*) M2B, पयसो ऽर्धपात्रे corr. cf. Âp. Çr. 8, 14, 14 resp. MS. I, 157, 6 पयस्योर्धपात्रे C पयर्धपात्रे M1 पयस्यर्द्धपात्रे NS पयस्यार्धपात्रे M2B पयस्यूर्धपात्रे Kc, शलाकस्थं mss. ausser NS cf. Âp. Çr. l. c. sū. 15. — 21) Statt *ekaikam* so M1C haben अनुपूर्वंहवींषि M2BS अनुपूर्वंहवींष्येकैकम् N. — 27) Zur form *pracinavavīt*° vgl. neben sū. 38 u. 1, 1, 2, 2 auch 2, 5, 1, 35 ff. 2, 3 ff — 30) जुहूमध्य mss. ausser C, धानाभिंधाना (st. *dhana*) mss. ausser M1C. — 32) स्रुग्दंडांदक्षिणातिक्रम्य M1 (udañn aber auch Gc und Âp. Çr. 8, 15, 10), श्रो (st. *om*) mss. ausser M1S (fehlt zufallig in C), प्रत्याश्रावयंति M2B. — 37) संसक्तां (st. *as*°) M1 (°*ktām* hier wie 1, 1, 2, 18, °*ktam* dagegen 1, 3, 2, 26 wie Mān. Gṛ. 2, 2, 22). —

यज्ञोपवीतानि कुर्वन्ति । ३८ । प्रतिपरिक्रामन्त्यृत्विजः । प्रतिपरिहरति हवींषि । ३९ । मन्थे हविःशेषमवदायेडामुपहूय न भक्षयन्ते । ४० । समिधा प्रतिपद्य द्वावनुयाजौ यजति " देवौ यजेति प्रथमं " [यज्ञ] यजेत्युत्तमम् । ४१ । सर्वाः स्रुचः संप्रगृह्णाति । ४२ । दक्षिणाग्निके होमौ हुत्वा कपालानि विमुञ्चति । ४३ । उदकाञ्जलिप्रभृति सिद्धं यथा पिण्डपितृयज्ञे ऽन्यद्धोमात् । ४४ । उदकुम्भस्योदकार्थान्कुर्वन्ति । ४५ । संनीयेडां स्रक्तिषु पिण्डान्निदधात्यूर्ध्वं प्रपितामहात्त्रीनन्वाचक्षाणो ऽमृतो ऽर्वाचः । ४६ । उत्तरस्यां वेदिश्रोणौ लेपं निमार्ष्टि । ४७ ॥ अत्र पितरो मादयध्वमिति परिश्रितान्निष्क्रामन्ति । ४८ ॥ सुसंदृशं त्वा वयमित्याहवनीयमुपतिष्ठन्ते । मन्त्रान्ते प्रणवेन ताम्यन्ते ॥ यदन्तरिक्षमिति गार्हपत्यम् । ४९ ॥ अमीमदन्त पितर इति परिश्रितं प्रविशन्ति । ५० । ऊर्णास्तुकप्रभृति सिद्धं यथा पिण्डपितृयज्ञे । ५१ ॥ परेतन पितरः सोम्यास इत्युदकुम्भेनाग्निं प्रसव्यं त्रिः परिषिञ्चन्पर्येति । ५२ । निधाय निधाय त्रिरपरिषिञ्चन्प्रतिपर्येति । ५३ । पिण्डानग्नौ प्रहृत्य वेदिं पर्योषति । ५४ ॥ अक्षन्नमीमदन्तेतिप्रभृति समानम् । ५५ । ॥ ६ ॥

उत्तरतो गार्हपत्यस्यैककपालाञ्श्रपयति यावन्ति करम्भपात्राणि । १ । तूष्णीमभिघार्योदीच उद्वासयति । २ । दक्षिणाग्नेरेकोल्मुकं धूपायत्पराचीनं हरन्त्यनपेक्षमाणाः । ३ । प्रागुदीच्यां दिशि मूतेनैककपालान् ॥ आखुं ते रुद्र पशुं करोमीत्याखुकिरा एकमुपवपति । ४ । उल्मुकं चतुष्पथे निधाय तस्मिन्नुप-

---

38) cf. zu sū. 27, प्रतिक्रम्य M1. — 40) °शेषसमवदा° M1 (fehlt zufallig in C), न fehlt in M1 (nicht aber auch in C; *na* im gegensatz zu 1, 7, 5, 25), भक्षयंते so hier d. mss. trotz 1, 7, 5, 25. — 41) [यज्ञ] nur in M1 (fehlt auch Âp. Çr. 8, 16, 17); st. *uttamam* wäre correcter *uttaram* so Âp. Çr. l. c. — 42) संपरिगृ° mss. ausser M1C. — 46) °महांस्त्रीन° mss. ausser C, ऽर्वाचः corr. र्वाचोत्तरस्यां d. mss. (offenbar mit krasis aus °*caḥ* + *utt*° cf. र्वाचो ohne *utt*° Gc; zur sache cf. Âp. Çr. 8, 16, 7). — 48) परिश्रृ° M1. — 49) °तिष्ठत M1, मंत्रांतेन M1, ताम्यते C, गार्हपत्य M2B. — 50) परिश्रृतं M1, vor *pariçritam* haben noch परिश्रितं mss. ausser M1C. — 51) ऊर्णास्रुक् resp. °स्तुक् mss. ausser M1. — 53) निधाय निधाय corr. nach 1, 1, 2, 15 निधायंनिधायं C, bloss einmal निधायं M1 u. निधाय d. übr.; त्रिपरिषिं° NC (1, 1, 2, 15 aber auch w. o.). — 54) पर्योषति C, °षंति mss. ausser M1C (1, 8, 6, 23; 2, 5, 5, 18 aber alle auch w. o.).

7 (cf. MS. I, 10, 4. 20; Âp. Çr. 8 17-19; Gc nur ganz allgemein): 1) °कपालान्निर्वपति (v. l. °लानश्रपयति d. i. natürlich °लानश्रप°, wie alle schreiben) Kc zu Kāty. Çr. 5, 10, 2 Ed. — 3) धूपायत्परा° M1, हरत्य° C (plur. ohne *anapekṣ*° auch MS. I, 160, 1), °नवेक्षमाणाः mss. ausser M1C. — 4) °खुकिर M1 (°रा loc. für °राव् nach MS. I, 160, 3 cf. I, 91, 14). —

समाधाय परिसमुह्य पर्युक्ष्य परिस्तीर्य मध्यमपर्णे सर्वेषां समवदायाभिघार्यैष ते रुद्र भाग इति जुहोति ।५। पृथगादायावाम्ब रुद्रमदिमहीति त्रिस्त्रिः परियन्ति पतिकामा च ।६॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादिति जपन्ति ॥ मृत्योर्मुक्षीय मा पत्युरिति पतिकामा ।७। तानूर्ध्वानुदस्योदस्य "भगोऽसि भगस्य लप्सीयेति प्रतिलभन्ते ।८। तान्यजमानाय समावपन्ति पतिकामायै च ।९। तान्मूते कृत्वा "रुद्रैष ते भाग इति वृक्ष आसजति ।१०॥ धाम्नो धाम्न इति तद्व्याख्यातम् ।११। आदित्यं घृते चरुं निर्वपेत् ।१२। पुनरेत्य गृहेष्विदावत्सरीयां स्वस्तिमाशास इत्याह यजमानः ।१३। सिद्धेष्टिः संतिष्ठते ।१४। सद्यः पौर्णमासेन संस्थाप्य ।

यो अस्याः पृथिव्या अधि त्वचि निवर्तयत्योषधीः ।
तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ॥ १५ ॥

अग्निस्तिग्मेन शोचिषेतिप्रभृति समानम् ।१६। ॥ ७ ॥

शुनासीर्यं चतुर्षु मासेषु सद्यश्चतुरहे मासि वा ।१। वैश्वदेवेन व्याख्यातम् ।२। आग्नेयो ऽष्टाकपाल इतिप्रभृतीन्यष्टौ सौर्य एककपाल इत्यन्तानि ।३। प्राक्स्विष्टकृतो मासनामानि जुहोति ।४। सीरं द्वादशयोगं दक्षिणोष्टारो वानड्वान् ।५॥ अनुवत्सरीयोद्वत्सरीये स्वस्तिमाशास इत्याह यजमानः ।६। सिद्धेष्टिः संतिष्ठते ।७। सद्यः पौर्णमासेन संस्थाप्य ।

येन मासा अर्धमासा ऋतवः परिवत्सराः ।
येनैते प्रजापतेरीजानस्य निवर्तयन् ।

---

5) परिसमूह्य mss. ausser M1C. — 6) पृथगाह्यायाº M2BS, ºमदीमहीति NSC (als v. l. auch MS. I, 144, 6), पर्यंति (st. *pariyanti*) schreiben alle wie Man. Gṛ 2, 6, 6 cf. व्यंतु mss. 1, 6, 4, 21b, पतिकामा corr. cf. MS. I, 160, 11 ff. ºकामां d. mss. (in C eine undeutliche correctur, die sich vielleicht als ºकामा lesen lässt). — 7) जपंत्युतोर्मुक्षीय M1C. — 9) cf. Âp. Çr. 8, 18, 5, wo gegen Garbe mit dem comm. *patikāmayāç* zu lesen (man beachte *ca*) und *saṁnamayatyaḥ* wahrscheinlich zu corr ist, cf. auch MS. I, 160, 13 ff. und Caland, ZDMG 52, 428. — 10) आसचति so M1 आसजति C आसिंचति d ubr. (v. Schroeder l. MS. I, 160, 15 *asañcati*, PW² *asacanti*) — 13) च nach *aha* mss. ausser M1C. — 15) योस्याः schreiben mss. ausser C.

8 (cf. Âp. Çr. 8, 20-22). 3) इत्येतानि mss ausser M1C. — 5) द्वादशायोगं M1 (fehlt zufallig in C); *usṭāro* ist etwas auffallend, noch mehr die stellung von *vā*, weshalb man उष्टापि वा vermuthen möchte (in C eine vielleicht hieraus entsprun-

तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ॥ ८ ॥

अग्निस्तिग्मेन शोचिषेतिप्रभृति समानमन्यद्व्रतेभ्यः । ९ । निखिलं केशश्मश्रु यजमानो वापयते । १० । पर्वण्यनन्तरा सोमेन यजेत पशुना वा । ११ ।

अथ पञ्चसाँवत्सरिकाणि । १२ । तत्रँ वैश्वानरपार्जन्याः । १३ । प्रसिद्धः प्रथमः सँवत्सरः । तस्मात्ते या पूर्वा पौर्णमासी तां शुनासीर्यायापवसति । योत्तरा तां वैश्वदेवाय । १४ । प्रसिद्धो द्वितीयः सँवत्सरः । १५ । तथा तृतीयः । मासमुत्सृज्य वैश्वदेवेन यजेत । १६ । प्रसिद्धश्चतुर्थः संवत्सरः । १७ । तथा पञ्चमः । तस्य साकमेधेभ्यो ऽधि शुनासीर्यं पञ्चसु मासेषु मासेषु । २८ । ॥ ८ ॥

॥ इति मानवसूत्रे प्राक्सोमे सप्तमो ऽध्यायः ॥

---

gene undeutliche verschreibung). — 8) मासा अर्ध° corr. cf. TBr 1, 5, 5, 6; Âp. Çr. 8, 21, 1 मासार्ध° d. mss. mit krasis — 10) केशश्मश्रू mss. ausser M1C resp corr. S cf. zu 1, 4, 1, 2. — 11) *anantara* adv. cf. 1, 7, 1, 14. — 12) °वत्सारि° mss. ausser M1Gc. — 14) पूर्वा mss. ausser M1GcKc, °पविशति (st. °पवसति) C. — 18) शुनासीर्ये N.

*Hier schliesst Gc.*

ऐन्द्राग्नेन पशुना यक्ष्यमाणो " वाग्घोता दीक्षा पत्न्यापो ऽध्वर्युर्वातो ऽभिगरः प्राणो हविर्मनो ब्रह्मा तपसि जुहोमि स्वाहेति षड्ढोतारं मनसानुद्रुत्य जुहोति । १ । आग्नावैष्णवमेकादशकपालं निर्वपति । पूर्णाहुतिं वा । २ ॥ उरु विष्णो विक्रमस्वेत्याहवनीये हुत्वा यूपमच्छैति पालाशं खादिरं रौहितकं वा । बैल्वं ब्रह्मवर्चसकामस्य । ३ । अयूप्यानतिक्रम्यात्यन्यानगां नान्यानुपागामिति यूपं जोषयते बहुशाखं बहुपर्णमशुष्काग्रमसुषिरमनधिशाख्यमृजुमूर्ध्वशल्कमुपरिष्टादुपावनतं प्रागुदञ्चं प्रह्वाणं प्राञ्चं प्रत्यञ्चं वा । ४ ॥ विष्णवे त्वेत्याग्नेन पर्यनक्त्यल्कसमरे शल्कसमरे वा । ५ ॥ ओषधे त्रायस्वैनमिति दक्षिणास्मिन्यूपान्ते दर्भमन्तर्दधाति । ६ ॥ स्वधिते मैनं हिंसीरिति परशुना प्रहरति । ७ । प्रथमोत्पतितं शल्कमवयच्छति । ८ । तताछिनत्ति । अनक्षसङ्गं स्थाणुमुच्छेषति । ९ ॥ यं त्वामयमिति प्राञ्चं प्रह्वापयति । १० ॥ दिवमग्रेण मा हिंसीरिति पतन्तमनुमन्त्रयते । ११ ॥ वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति । १२ ॥ सहस्रवल्शा वि वयं रुहेमेत्यात्मानं प्रत्यभिमृशति । १३ । अष्टाश्रिं गोपुच्छं करोत्यस्थूलमनणुमतष्टमूलम् । १४ । पञ्चारत्निप्रभृत्याम्नातं प्रमाणम् । १५ । यूपस्य स्वरुं कुर्याच्चषालं च पृथुमात्रमष्टाश्रि

---

**1** (cf. MS. I, 2, 14; III, 9, 2-4; Âp. Çr. 7, 1-3. 7-9; Schwab p. 1-65): 2) च (st. *vā*) M1 (so zu l.? fehlt leider zufällig in C). — 3) रौहितँ B u. रोहितँ M2. — 4) प्रह्वाणं so alle cf. zu 2, 3, 6, 1 u. vgl. Çāṅkh. Çr. 5, 16, 4. — 5) °नक्त्यलकसमरे C [nach Apte Dictionary अल्क: 1. A tree; 2. A member of the body; hier etwa «wurzelfasern», soweit sie am unteren baumstamm hervorragen; *çalka* hier «rinde» cf. *saçalka* sowie *tvaksaṁdhau* P3 als erklärung des *çalkasamare*; P3 liest अब्का° st. *alka*°], वोषधे d. mss. mit unregelm. Saṁdhi. — 7) हरति M2B. — 8) शकलम° mss. incl. P3 ausser M1C. — 9) Die mss. schreiben तताग्राछि° C ततग्राछि° M1 तताछि° d. übr. incl. P3 (man kann daher auch तता छि° lesen), °मुच्छेषति corr. cf. MS. III, 115, 2 °मुछेषति M1 °मृजुशंखयति (d. i. °*m ucchesayati*?) C °मुनछेखाति d. übr. (nach allem konnte man auch °मुञ्शिँषति schreiben). — 12) शतवल्लिशो mss. ausser C. — 13) °वल्लिशा mss. ausser C. — 14) अष्टाश्रिं

संनतमध्यम् । १६ । अश्रिभिरश्रीः संपाद्याङ्गुलिमात्रमूर्ध्वं चषालाद्यूपस्य स्वरुं कुर्यात् । १७ । व्रतोपेतस्येध्माबर्हिः संनह्यति । आश्ववालः प्रस्तरो विधृती च । कार्ष्मर्यमयाः परिधयः । विंशतिदार्विध्मम् । १८ । वेदिं करोति पश्चोत्तरां वारुणप्रघासिकीम् । १९ । निःसारणान्तां कृत्वा वसन्ति । २० । श्वोभूते पाणी प्रक्षाल्य विहारं परिस्तीर्य पाशुकानि पात्राणि प्रयुनक्त्यभ्रिं प्रथमोत्पातितं प्लक्षशाखां वपाश्रपण्यौ रशने शूलं मैत्रावरुणदण्डमवदानश्रपणीं स्वरुं स्वधितिं च । २१ । उत्तरवेदेः प्रोक्षणप्रभृति सिद्धमा पूर्णाहुतेः । २२ । पृषदाज्यवन्ति पात्राणि प्रयुनक्ति । २३ । संमार्ग्योलपराजिं स्तृणाति । २४ । यजुरुत्पूताभिः पात्राणि प्रोक्ष्य दध्याज्यं निरुप्य पर्यग्निं करोति । २५ । उत्तरं परिग्राहं परिगृह्णाति । २६ । सिद्धमाज्यग्रहेभ्यः । २७ । चतुर्गृहीतान्याज्यानि पृषदाज्यवन्ति गृह्णाति । २८ । सिद्धमाज्यानां सादनात् । २९ । ॥ १ ॥

उत्तरतो गार्हपत्यस्य "देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते । १ ॥ अभ्रिरसि नारिरसीत्यभिमन्त्रयते । २ ॥ इदमहं रक्षसो ग्रीवा अपिकृन्तामीत्यग्रेणाहवनीयं यूपावटं परिलिखति ॥ इदमहं यो मे समान इति द्वितीयं "यो ऽसमान इति तृतीयम् । समानमन्यत् । तूष्णीं चतुर्थम् । ३ । तस्यार्धमन्तर्वेद्यर्धं बहिर्वेद्युपरसंमितं खनति । ४ । यूपं प्रक्षाल्य तीर्थेनान्ववहृत्याग्रेण यूपावटं संस्तीर्णे प्राञ्चं निदधाति । मूले प्रथमोत्पातितं । मध्ये स्वरुं रशनामग्रे चषालम् । ५ । अप्सु यवानाप्य यूपं प्रोक्षति ॥ पृथिव्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं "दिवे त्वेत्यग्रम् । ६ ॥ शुन्धन्तां लोकाः पितृषदना इति यूपावटमवसिञ्चति । ७ ॥ यवो ऽसीति यवानावपति । ८ ॥ पितृषदनं त्वा लोकमवस्तृणामीति दर्भैरवस्तृणाति । ९ ॥ स्वा-

---

(nebst verschreibungen) mss. ausser M1 (°श्रि geschr.), गोपुच्छं «kuhschwanzähnlich» (anders, wie es scheint, Schwab p. 8) cf. *vatsajñuṁ* 1, 1, 3, 1, °स्थूणामत्यणाम° M1. — 16) स्वरूपं (st. स्वरुं) NS, °श्रास्त्र mss. ausser M1P3 (in beiden °श्रिः geschr.), संलक्त° mss. incl. P3 ausser C cf. zu 2, 3, 1, 13. — 17) अस्त्रिभिरस्त्रीः schreiben mss ausser M1 (cf. zu sū. 14 u. 16), संपद्या° mss. ausser M1C, स्वरुं fehlt in mss. incl. P3 ausser M1 (*yūpasya svarum* ist aus sū. 16 wiederholt wegen *aṅgulimātram*). — 18) आश्वचारः mss. incl. P3 ausser M1Kc, °दार्विध्मम् so alle incl. Kc cf. zu 1, 1, 1, 52. — 20) °सारणांतं mss. ausser M1CKc. — 21) पशुकानि M2B, शकलं Kc nach *prathamotpatitaṁ*, °मवदानश्रपणीं M1C °मादानश्रपणीं Kc — 23) °ज्यवद्भिः M1. — 25) निरूप्य mss. ausser M1C

2 (cf. MS. I, 2, 10. 11. 14; III, 8, 8 ff. 9, 3 ff.; Âp. Çr. 7, 9-12; Schwab p. 65-74): 5) स्वरुरशनाम् mss. ausser C (über *ca*-lose verbindungen s. zu 1, 2, 1, 18). — 7) °सिंचयति C.

वेशो ऽसीति प्रथमोत्पतितं शल्कमवदधाति । १० ॥ घृतेन द्यावापृथिवी आपृणेथामित्यभिजुहोति । ११ । आज्यस्थालीं स्रुवं चादाय " यूपायाज्यमानायानुब्रूहीत्यनुवाचयति । १२ ॥ देवस्त्वा सविता मध्वानक्त्विति यजमानः स्वरुमनक्त्वयमार्द्ध्या मूलात् ॥ इन्द्रस्य चषालमसीति चषालम् । १३ ॥ सुपिप्पला ओषधीस्कृधीति प्रतिमुञ्चति । १४ । अक्तं नावमृज्जेदा परिव्ययणात् । १५ ॥ यूपायोच्छ्रियमाणायानुब्रूहीत्यनुवाचयति । १६ ॥ दिवमग्रेणोत्तभानेत्युच्छ्रयति । १७ ॥ ता ते धामानीत्यवदधाति । १८ ॥ विष्णोः कर्माणि पश्यतेति पश्चादुपस्थं समं स्थापयत्यग्निमभिमुखामग्निष्ठाम् । १९ ॥ ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामीति पांसुभिः पर्यूहति । २० ॥ ब्रह्म दृंह क्षत्रं दृंहेति यजमानो मैत्रावरुणदण्डेन प्रदक्षिणं संमृशति । २१ । अपो ऽनुपरिषिञ्चति । २२ । दर्भाणां रशने " द्विगुणा द्विव्यामा त्रिगुणा त्रिव्यामा । २३ ॥ तद्विष्णोः परमं पदमिति त्रिवृता स्वरुणा च यूपमूर्ध्वं त्रिः समुन्मार्ष्टि । २४ ॥ यूपाय परिवीयमाणायानुब्रूहीत्यनुवाचयति । २५ ॥ परिवीरसीति नाभिदघ्ने त्रिवृता त्रिः परिव्ययत्युत्तरमुत्तरं प्रदक्षिणम् । २६ । प्रादेशमात्रे समस्याणीयांसं स्थवीयस्युपकर्षति । २७ । ऊर्ध्वामुदूह्य रशनां " दिवः सानूपेषेत्युत्तरतो ऽग्निष्ठाया उत्तमे गुणे स्वरुमुपकर्षति । २८ ॥ स्नातमानयेति प्रेष्यति । २९ । अजमप्रतिषिद्धं रोहितं द्विरूपं [वा] कालालं पीवानं समाङ्गं पत्रदं तीर्थेन प्रपाद्य पुरस्तात्प्रत्यङ्मुखमवस्थापयति । ३० । ॥ २ ॥

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः ।
ता अस्मै प्रतिवेदय चिकित्वाननुमन्यताम् ॥ a)
इमं पशुं पशुपते ते ऽद्य बध्नाम्यग्ने सुकृतस्य मध्ये ।
अनुमन्यस्व सुयजा यजे हि जुष्टं देवेभ्य इदमस्तु हव्यम् ॥ b)

---

— 10) शकलम° mss. ausser M1 cf. zu 1, 8, 1, 8. — 13) °नक्त्वयाद्° C, चषालमसीति fehlt in M2B. — 15) अक्तं (sc. *yūpam*) so M1C अक्ता P3 अक्का M2 अंक्का d. übr. — 16) °च्छ्रीय° mss. ausser M1CP3. — 17) fehlt in mss. ausser M1CP3 (in S nachgetragen) — 19) °भिमुखाम° so P3 u. Maitr. Kār. °भिमुखान° M1C °भिमुखम° d. übr. — 23) द्विव्यामा und त्रिव्यामा mss. ausser M1 resp. P3. — 24) च fehlt in M1 (wohl nicht zufällig cf. zu 1, 2, 1, 18). —

28) °मुदूह्य BNS, सानु° mss. ausser M1P3, °ष्ठायोत्तमे d. mss. mit unregelm. krasis ausser P3. — 30) [ ] fehlt in M1C, यवदंतं (d. i. *pa*°) mss. ausser M1C cf. Kāty. Çr. 6, 3, 21.

**3** (cf MS. I, 2, 15; III, 9, 6 ff.; Âp. Çr. 7, 12-17; Schwab p. 74-108): 1) a) तास्मै M1 mit krasis, °वेदयाश्चिकि° M1C, चिकित्वाननु° corr. °त्तमनु° M1C °त्वमनु° d. ubr. (man kann auch चिकित्वं अनु° corrigiren cf. वायुष्टं अग्ने sū. 3c); b) सुयुजा (*suyūjā* M2) mss.

इत्यौपाकरणौ जुहोति । १ ॥ इषे त्वेति दर्भावादत्ते ॥ उपावीरसीति हरिणीं प्लक्षशाखां पलाशवतीम् । २ ॥ उपो देवान्दैवीर्विश इति दर्भाभ्यां शाखया चोपस्पृश्योपाकृत्य पञ्च जुहोति ।

प्रजानन्तः प्रतिगृह्णन्तु पूर्वे प्राणमङ्गेभ्यो ऽधि निश्चरन्तम् ।
इतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥ a)
ये बध्यमानम् ॥ b)
य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।
वायुष्टं अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया संरराणः ॥ c)
येषामीशे पशुपतिः पशूनां चतुष्पाद उत ये द्विपादः ।
निष्क्रीतास्ते यज्ञियं भागं यन्तु रायस्पोषा यजमानं सचन्ताम् ॥ d)
प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।
उपाकृतं शशमानं सधस्थाज्जीवं देवानामप्येतु पाथः ॥ e)

इति हुत्वा निर्मन्थ्येन प्रचरति । स व्याख्यातः । ३ ॥ देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते । ४ । दक्षिणं बाहुं परिहृत्योर्ध्वमुन्मृज्य ॥ ऋतस्य त्वा देवहविः पाशेनेति पश्चाद्देवतमदक्षिणया शिरस्युपदधाति । ५ ॥ धर्षा मानुष इत्युत्तरतो यूप रशनयावाङ्गियुनक्ति । ६ ॥ अद्भ्यस्त्वौषधीभ्य इति प्रोक्षति । ७ ॥ अनु त्वा माता मन्यतामित्यनुमानयति । ८ ॥ अपां पेरुरसीत्यप उपपाययति । ९ ॥ स्वात्तं सद्धविरित्युरः प्रोक्षन्सर्वतः प्रोक्षति । १० । पूर्णास्रुवं सादयित्वा सिद्धमाघारात् । ११ । स्रौचमाघारमाघार्य जुह्वा पशुमनक्ति ॥ सं ते वायुरिति प्राणदेशे ॥ सं यजत्रैरङ्गानीति ककुब्देशे ॥ सं यज्ञपतिराशिषेति भसदि । १२ । सिद्धमा प्रवरात् । १३ । प्रवृते मैत्रावरुणायौदुम्बरमास्यदघ्नं दण्डं ॥ मित्रावरुणयोस्त्वा बाहुभ्यां प्रयच्छामीति प्रयच्छति । १४ । सिद्धमा प्रयाजेभ्यः । १५ । आश्राव्यैकादश प्रयाजान्यजति । १६ ॥ समिद्धः

---

ausser M1C, यजेद्ध mss. ausser C. — 2) उपाविर° mss. ausser M1C. — 3) a) पूर्वेण M1; — c) द्विरूपाः M1, वायुष्टंमग्रे so M1 (*taṁ = tān*) वायुष्टंमग्रये C वायुष्मंपे NS वायुष्टाग्ने B u. °ग्रे M2; — d) यज्ञीयं M1 (hier vielleicht so besser; übrigens hat M1 stets *yajñiya* st. *yajñiya*), रायस्पोषाय M1; — e) सदस्याज्जीवं C (cf. *yad asthāj j°* TS. 3, 1, 4, 3; *sadhasthāt*, wenn richtig, ist von *upākṛtam* abhängig); — निर्मन्थेन so alle wie 1, 7, 1, 38. — 6) मानुषा (auch °षाः P3) mss. ausser M1 (मानुषा MS. I, 24, 12 gegen die accentregel; l. also wohl मानुष oder corr. nach Kāṭh. °षं d. i. °षान्), रशनायावा° CM2BP3. — 9) उपपायति mss. ausser M1. — 10) °त्युत्तरतः (st. °त्युरः) mss. ausser M1CP3. — 11) सादयति mss ausser M1CP3. — 12) ककुद्देशे mss. ausser M1CP3. — 14) प्रयच्छति fehlt in M1. — 18) च-

प्रेष्येति प्रथमं " प्रेष्य प्रेष्येत्युत्तरान् । १७ । चतुर्थे चतुर्थे समानीयैकादशाय शिष्टात्याक्रम्य संगृह्य स्वरुं स्वधितिं जुह्वामक्त्वा " घृतेनाक्तौ पशूँस्त्रायेथामित्यन्तराशृङ्गे स्वरुणा पशुमनक्त्यस्पृशन्स्वधितिना । १८ । अक्तया शृतस्यावद्यत्यनक्तया विशसति । १९ । उत्तरतश्चात्वालस्य शामित्राय लक्षणं करोति । २० । उद्धत्यावोक्ष्य " पर्यग्नये क्रियमाणायानुब्रूहीत्यनुवाचयति । २१ । आहवनीयादुल्मुकेन पशुमाहवनीयं यूपमाज्यानि चात्वालं शामित्रलक्षणे निधाय निधाय त्रिः पर्यग्निं करोति । २२ । उल्मुकमाग्नीध्राय प्रदाय " ये बध्यमानं " य आरण्याः " प्रमुञ्चमाना इति तिस्र आकृतीर्जुहोति । २३ । यूपात्प्रमुच्य पशुमन्वारभ्याश्रावयति । २४ । प्रत्याश्रुत " उपप्रेष्य होतर्हव्या देवेभ्य इति प्रेष्यति । २५ । काश्मर्यस्य वपाश्रपण्यावेकशृङ्गा द्विशृङ्गा च । ताभ्यां यजमानो " रेवति प्रेधेति पशुमन्वारभेते । २६ ॥ उरो अन्तरिक्षेत्युदञ्चं प्रक्रमयति । २७ । उल्मुकमाग्नीध्रो ऽग्रतो हृत्वा शामित्रलक्षणे निदधाति । २८ । दक्षिणतः पश्चाच्छामित्रस्य " समस्य तन्वा भवेत्यौपाकरणं दर्भं न्यस्यति । २९ । तस्मिञ्शमिता प्रत्यक्शिरसमुदक्पादमन्तरेवोष्माणं संज्ञपयति । ३० ।

नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः ।
सम्यगायुर्यज्ञं यज्ञपतौ धाः ॥

इत्युक्त्वावर्तते । ३१ ॥ स्वर्विदसीति संज्ञप्यमाने यजमानो जपति । ३२ ॥ इह प्रजा विश्वरूपा रमन्तामित्यवेक्षमाणाः पृषदाज्यमाशासते यावत्पशुसंज्ञपनात् । ३३ ।

यत्पशुर्मायुमकृतोरो वा पद्भिराहते ।
अग्निर्नस्तस्मादेनसो विश्वान्मुञ्चत्वंहसः ॥

इति संज्ञप्तहोमं जुहोति । ३४ ॥ शमितार उपेतनेति जपति । ३५ ॥ अदितिः पाशानित्युन्मुञ्चति रशना पशोः । ३६ ॥ यो नो द्वेष्ट्यधरः स पद्यतामित्यभिचरतः स्तम्बं दारु वापिदध्यात्तूष्णीमनभिचरतः । ३७ । एकशृङ्ग्या चात्वाले रशनां प्रविध्यति । ३८ । ॥ ३ ॥

---

तुर्थे in M2B nur einmal, स्वरुस्वधितिं N (zur *ca*-losen verbindung *svarum̐ svadhitim* statt der dvandvaform *svarusvadhitī* so Âp. Çr. 7, 14, 10 vgl. oben zu 1, 2, 1, 18), जुह्वामंक्त्वा BNS. — 21) उद्धृत्या° M2B. — 22) निधायंनिधायं M1C cf. zu 1, 1, 2, 15. — 23) आज्याकृती° C. — 27) Statt उरो (so CP8, *uttaro* M2BNS) अन्तरिक्ष nach MS. I, 25, 7 hat nach einer anderen quelle उरोरंतरिक्षस्याद्यत्त M1. — 29) °पश्चाच्छामित्रीयस्य mss. ausser M1C. — 34) °कृतउरो schreiben d. mss., °राहते corr. °राकृतः d. mss. — 37) संपद्यता° M2B, स्तंब mss. ausser M1 (l. स्तम्भं? cf. Âp. Çr. 7, 17, 7), दारु वा° corr. wie auch schon Schwab दार्वा° d. mss.

नमस्त आतानेति पत्नीमादित्यमुपस्थापयति ।१॥ अनर्वा प्रेहीत्यभ्युदानयति ।२॥ देवीराप इति चात्वाले पत्न्यपोऽभिमन्त्रयते ।३॥ वाचमस्य मा हिंसीः प्राणमस्य मा हिंसीरिति यथालिङ्गमङ्गानि प्रक्षालयति ' पत्न्यासिञ्चति ॥ यत्ते क्रूरमिति कण्ठम् ।४॥ गात्राण्यस्य मा हिंसीश्चरित्रानस्य मा हिंसीरिति यथालिङ्गमङ्गानि संमृशति ।५॥ शमद्भ्य इत्यपां स्तोकान्भूमिगताननुमन्त्रयते ।६॥ ओषधे त्रायस्वैनमित्यौपाकरणं दर्भमग्रेण नाभेः पार्श्वतो निदधाति ।७॥ स्वधिते मैनं हिंसीरिति स्वधितिना तिर्यगाछिनत्ति ।८। त्वचं चाग्रमुपनियम्य मूलमाशसनेऽक्त्वा " पृथिव्यै त्वा रक्षसां भागोऽसीति दक्षिणापरमवान्तरदेशं न्यस्यति ।९॥ इदमहं रक्षोऽवबाध इदमहं रक्षोऽधमं तमो नयामीति पार्ष्ण्या न्यधितिष्ठते ।१०॥ इषे त्वेति वपामुत्खिदति ।११॥ ऊर्जे त्वेत्येकशृङ्गया तनिष्ठ उपतृणत्ति ।१२॥ देवेभ्यः शुन्धस्वेत्यद्भिरवोक्षते ।१३॥ देवेभ्यः शुम्भस्वेति स्वधितिना वपां प्रत्यूहति ।१४॥ घृतेन द्यावापृथिवी प्रोर्णुवाथामिति द्विशृङ्गां प्रच्छादयति ।१५॥ अमुष्मै त्वेति यथादेवतं वपामुत्कृन्तति ।१६। मुष्टिना शमिता वपोद्धरणं संगृह्यासीता वपाया होमात् ।१७॥ नमः सूर्यस्य संदृश इत्यादित्यमुपतिष्ठते ।१८॥ उर्वन्तरिक्षं वीहीति समया पशुं वपां हरति ।१९॥ प्रत्युष्टं रक्ष इति शामित्रे निष्टपति ।२०। उल्मुकमाग्नीध्रोऽग्रतो हृत्वाहवनीये प्रत्यवसृजति ।२१। अन्तराग्निं यूपं च हरति ।२२। दक्षिणतः प्रतिप्रस्थातासीनो वपां श्रपयति ।२३॥ वायोः स्तोकानामिति दर्भाग्रमुपास्यति ।२४।

त्वामु ते दधिरे देवयज्ञा हव्यवाहं घृतंकर्तारमुत यज्ञियं च ।
अग्निः सुदक्षः सुतनुर्ह भूत्वा देवेभ्यो हव्या वह जातवेदः ॥

इति वपामभिजुहोति ।२५॥ स्तोकेभ्योऽनुब्रूहीत्यनुवाचयति ।२६। श्येनीं घृतां " सुपिप्पला ओष-

---

4 (cf. MS. I, 2, 16; III, 10, 1; Âp. Çr. 7, 18-21; Schwab p. 108–123): 4) मा हिंसीः प्राणमस्य fehlt in M2B. — 6) शमिद्भ्य S समिद्भ्य M2B. — 9) °शासने mss. ausser M1PaP3 cf. zu sū. 37, °शासनेक्त्वा NS, °परमवान्देशं M2B. — 10) पार्ष्ण्यास्येधि° mss. ausser M1CP3. — 11) °मुतखिदति so M1 °मुतस्विदति P3 °मुत्खिनति (für °त्ति nach der 7. Classe?) C °मुदस्विदति d. übr. — 12) तनिष्ठ so alle (तन्निष्ठं MS. III, 129, 7 ist in तनिष्ठं zu corrigiren), उपतृणत्ति so Pa उपतृणात्ति M1C उपशृणाति M2B उपस्तृणाति NS. — 13) °वोक्षति mss. ausser M1CPa Maitr. Kār. — 14) शुंधस्वेति M2B. — 16) यथादेवतं mss. ausser M1CP3 cf. zu sū. 37. — 20) शामित्रे so P3 cf. M1C zu 1, 8, 3, 29 und die ubrigen unten zu sū. 41 sowie *çāmitra*° 1, 8, 3, 22. 28 u. *çāmitrāya* ib. 20 alle, शामित्र्ये M1C °त्रये Pa °त्रीये d. übr. — 25) यज्ञीयं M1 (so vielleicht besser, wenn wie *çṛtaṁ* von *kartāram* abhängig; man vgl. jedoch auch zu 1, 8, 3, 3d und beachte das metrum), सुतनुर्भूत्वा M1C (*hi* st. *ha* TS. 3, 1, 4, 4), वहतु (aber *jatavedaḥ!* cf. übrigens auch zu 1, 6,

धीस्कृधीति दक्षिणतो बर्हिषि सादयति । २७ ॥ प्रयुता द्वेषांसीति वपाश्रपण्यौ प्रवृहति । २८ ॥ स्वाहाकृतिभ्यः प्रेष्येत्युत्तमेन प्रयाजेन प्रचर्यात्याक्रम्याभिघारयति ध्रुवां पृषदाज्यँ वपां ' नोपभृतम् । २९ । कृताकृतावाज्यभागौ । ३० । आग्नेयेन प्रचर्यापरेण स्रुग्दण्डान्दक्षिणातिक्रम्य सौम्येन प्रचरति । ३१ । अत ध्रुव ' तिष्ठन्नुपस्तीर्यावद्यति हिरण्यशकलं वपां हिरण्यशकलं ' ततो ऽभिघारयति । ३२ ॥ इन्द्राग्निभ्यां छागस्य वपाया मेदसो ऽनुब्रूहीत्यनुवाचयति । ३३ । आश्राव्येन्द्राग्निभ्यां छागस्य वपाया मेदसः प्रेष्येति प्रचरति । ३४ ॥ स्वाहा देवेभ्य इति पुरस्ताद्वपाया जुहुयाद्देवेभ्यो देवेभ्यः स्वाहेत्युपरिष्टात् । ३५ ।

जातवेदो वपया गच्छ देवाँस्त्वं हि होता प्रथमो बभूव ।
घृतस्याग्ने तन्वा संभव सत्याः सन्तु यजमानस्य कामाः । स्वाहा ॥

इति प्रतिनिगद्य वषट्कृते वपां जुहोति । ३६ । अत्याक्रम्य यथादेवतमाशासने पशुमभिघारयति । ३७ ॥ स्वाहोर्ध्वनभसमिति वपाश्रपण्यौ प्रहरति प्राचीमेकशृङ्गां प्रतीचीं द्विशृङ्गाम् । ३८ । संपातेनाभिजुहोति । ३९ ।

इदमापः प्रवहत यत्किंचिद्दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥

इति चात्वाले मार्जयित्वा " ब्राह्मणांस्तर्पयति प्रेष्यति । ४० । [उत्तरतः शामित्रस्य] ऊवध्यं गर्ते प्रविध्यति । ४१ । गुदमपर्यावर्तयन्नवदानानि श्रपयति । सव्यदक्षिणानि प्रज्ञातानि । शूले हृदयम् । ४२ । ॥ ४ ॥

स्रुचं शूर्पं चादायाध्वर्युः प्रत्युपक्रामति । १ । व्रीहीणां पशुपुरोडाशमनुनिर्वपति समानदेवतं पशुनैकादशकपालं द्वादशकपालँ वा । २ । न पात्राणि प्रोक्षति । नाज्यं निर्वपति । ३ । पश्चादुत्तरवेदेर्व्युह्यौषधीः पिष्टलेपं निनयति । ४ । अलंकृत्य जुहूपभृतावदायैन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहीत्यनुवाचयति

---

3, 5) M1, जातवेदाइति (offenbar nach der MS.-regel für °*da iti*) mss. ausser M1CP3. — 27) श्रिता M1 (zu *çy*° *çr*° cf. MS. III, 130, 12). — 28) प्रवर्हति mss. ausser M1CPaP3. — 29) स्वाहाकृतीभ्यः mss. ausser M1C, प्रयाजेन fehlt in M2B. — 32) वपाँ zweimal in M2B (zur sache vgl. Schwab p. 118 ff.). — 36) वषट्कृते वपां so C, वषट्वपां M1, bloss वषट्कृते d. übr. — 37) यथादेवत° so hier alle wie auch 1, 8, 5, 13 (sonst daneben auch यथादैवत°), °शासने wie sū. 9 mss. ausser M1PaP3. — 40) यत्किंचदु° mss. ausser M1C, °पिदुद्रोह M1. — 41) [ ] fehlt in M1CPa, aber nicht auch in P3. — 42) पर्यावर्तन्न° mss. ausser M1CPa.

5 (cf. MS. I, 2, 17; III, 10, 2-4; Âp. Çr. 7, 22-26; Schwab p. 123–149): 4) °व्यूह्यौ° BNS (die übr. ebenfalls ohne ी ausser P3). —

।५। आश्राव्यैन्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति प्रचरति ।६। औपभृतं जुह्वामानीयाग्नये पुरोडाशस्यानुब्रू-ह्यग्नये पुरोडाशस्य प्रेष्येति प्रचरति ।७। आग्नीध्रभागमपायात्येडायै पुरोडाशं मृष्यां(?)भिघारयति ।८। दक्षिणाग्निकौ होमौ हुत्वा कपालानि विमुञ्चति ।९। शृतेष्ववदानेषु प्रतिप्रस्थाता पृषदाज्यस्य स्रुवेणोप-हत्य वेदोपयामः "शृतं हविः शमिता इति पृच्छति ॥ शृतमिति प्रत्याह । समयार्धे द्वितीयं 'प्राप्य तृतीयम् ।१०॥ स्वाहोष्मणो ऽव्यथिष इत्यूष्माणमनुमन्त्रयते ।११। हृदयमवदानेषु कृत्वा शूलं निदधात्यस्पृश-न्प्रतिषिद्धानि ।१२। उत्तरतः परिक्रम्य "जुष्टं देवेभ्य इति यथादेवतं पशुमभिघारयति ।१३। त्रिवाजि-नानि कृत्वान्तराग्नीँ यूपं च हरति ।१४। दक्षिणतः प्रतिप्रस्थाता पशुहोत्रा [उत्तरतो] बर्हिष्युपसादय-ति ।१५। उपस्तृणाति जुह्वामुपभृतीडापात्र्याँ वसाहोमहवन्याम् ।१६। जुह्वां हिरण्यशकलमव-धाय "मनोतायै हविषो ऽवदीयमानस्यानुब्रूहीत्यनुवाचयति ।१७। उत्सादतो ऽङ्गानां कृत्तशाखाया अधि स्वधितिना द्विर्द्विरवद्यति हृदयाज्जिह्वायाः क्रोडात्सव्यात्कपिललाटात्पार्श्वयोर्यक्नो वृक्कयोर्द-क्षिणस्याः श्रोणेः पूर्वार्धात् ।१८। गुदं त्रेधा विभज्य तस्याणीयस उपभृति त्र्यङ्गाणाँ स्विष्टकृते समवद्य-ति दक्षिणस्य कपिललाटस्य पूर्वार्धाद्गुदस्य मध्यात्सव्यायाः श्रोणेः पश्चार्धात् ।१९। अनस्थीनां दैवताना-मिडामवदाय यूपेणोपसिञ्चति ।२०॥ अपानोषधीनाँ रस इति स्वधितिना यूषमायौति ।२१। तस्मिन्मेदः पर्यस्यति ।२२। त्रेधावद्यति जुह्वामुपभृतीडापात्र्याँ वसाहोमहवन्याम् ।२३॥ रेडसीति वसाहोमं गृ-हीत्वा पार्श्वेनापिदधाति ।२४। जुह्वाँ हिरण्यशकलमवधायाभिघारयति 'द्विरुपभृतम् ।२५॥ इन्द्राग्नि-भ्यां छागस्य हविषो ऽनुब्रूहीत्यनुवाचयति ।२६। आश्राव्यैन्द्राग्निभ्यां छागस्य हविषः प्रेष्येति प्रचर-

---

8) °पायातपतोडायै mss ausser M1, मृषा? CP3 मृष्या° d. ubr. (? Wohl nicht aus einem geläufigen worte entstellt). — 10) Ausser शमितारइति M1 haben alle nach MS. III, 132, 4 wie oben. — 11) स्वाहोष्माणो mss ausser M1P3, व्यतिष M1 (cf. v Schroeder zu MS. 1, 27, 4), इत्यौष्माणम? mss. ausser M1CP3 — 15) [ ] fehlt in M1 cf. auch Âp Çr. 7, 23, 11, उत्तरबर्हिषि Pa. — 18) उत्सादतो so CP3 (nach P3 = *kṛntanasthanāt*, wodurch Schwab's conjectur p. 144 bestätigt wird) उ-त्सादंतो M1 उत्सादितो d ubr., कृत्तशाखाया अधि corr. wie auch schon Schwab °खयाग्रधि M1Pa °खयाधि C °खयाऽधि d. übr., °र्यकणो-वृक्का° mss. ausser M1CP3 (alle schreiben *ṇ* wegen des vorherg. *r* cf. zu 1, 2, 6, 24). — 19) तस्याणीयस so offenbar P3 cf. Schwab तस्याणीयस्तउप° M2BNS तस्याःप्रापणीयस्त-उप° M1 तस्याःप्रापणीयस्योप° C, मध्यात् fehlt in mss. ausser M1CP3 (in S nachgetragen) cf. auch MS. III, 133, 16. — 20) देवता° mss. ausser C cf. sū. 29, wo alle wie C haben; °मिडायाम° P3 (so besser?). — 25) °वदाया° C. — 29) cf. Mān. Gṛ. 2, 4, 10, wo die interpunction vor *yathā* zu streichen ist; *yathā vājinena* ist = *vājinavat* und bezieht sich auf Man. Çr. 1, 7, 2, 16; वनस्पतिं fehlt in mss. ausser M1C.

ति । २७ । अर्धर्चे याज्यायाः प्रतिप्रस्थाता " घृतं घृतपावानः पिबतेति वसाहोमं जुहोति । २८ । दैवतैः प्रचर्य वसाहोमशेषेण दिशः प्रतियजति यथा वाजिनेन । वनस्पतिं पृषदाज्यस्य । २९ । सकृदवदाय " वनस्पतये ऽनुब्रूहीत्यनुवाचयति । ३० । आश्राव्य " वनस्पतये प्रेष्येति प्रचरति । ३१ । औपभृतं जुह्वामानीयाग्नये स्विष्टकृते ऽनुब्रूहीत्यनुवाचयति । ३२ । आश्राव्याग्नये स्विष्टकृते प्रेष्येति प्रचरति । ३३ ॥ ऐन्द्रः प्राण इत्यवदानशेषमिडां च संमृशति । ३४ । उपहूयमानायामध्वर्युर्होत्रे हरति ' वनिष्ठुमग्नीधे । ३५ । भक्षयित्वा मार्जयन्ते । ३६ । वरो दक्षिणा । ३७ । ॥ ५ ॥

आनुयाजिकीं समिधमादायाग्नीदीप्यमानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्रस्थास्यामः " समिधमाधायाग्नीत्परिधींश्चाग्निं च सकृत्सकृत्संमृड्ढीति प्रेष्यति । १ । शामित्रादङ्गारानाग्नीध्रो ऽग्रेण होतारमन्तर्वेदि निवपति । यथा प्रेषितं च संमार्ष्टि । २ । सिद्धमानुयाजेभ्यः । ३ । पृषदाज्यं जुह्वामानीयाश्राव्यैकादशानुयाजान्यजति । ४ ॥ देवेभ्यः प्रेष्येति प्रथमं " प्रेष्य प्रेष्येत्युत्तरान् । ५ । असंभिन्दन्गुदस्य प्रतिप्रस्थाता स्थविमतो ऽवदाय " समुद्रं गच्छ स्वाहेतिप्रभृतिभिर्वषट्कारे वषट्कारे जुहोति । ६ ॥ मनो हार्दि यच्छेति हृदयदेशमारभ्य जपति । ७ ॥ ओषधीभ्यस्त्वेति दर्भेषु लेपं निमार्ष्टि । ८ । अत्याक्रम्य संगृह्य स्वरुं जुह्वामनक्त्यधस्ताच्चोपरिष्टाच्च । ९ । हुत्वा स्वरुमवधाय " दिवं ते धूमो गच्छत्विति जुहोति । १० । ऊर्ध्वं स्वरुहोमात्प्रागनूदेशाद्यूपो नोपस्पृश्यः । ११ । सिद्धमा सूक्तवाकात् । १२ ॥ सूक्ता प्रेष्येति संप्रैषः । १३ । सिद्धं पत्नीसंयाजेभ्यः । १४ । जाघन्या पत्नीः संयाजयति । १५ । उत्तानाया देवानां पत्नीभ्यो ऽवद्यत्यग्नये गृहपतये नीच्याम् ' उत्तानाया इडाम् । १६ । सिद्धमा समिष्टयजुर्भ्यः । १७ । त्रीणि समिष्टयजूंषि जुहोति । १८ । शूलेनावभृथं यन्ति प्राञ्चो दक्षिणा वा । १९ ॥ शुगसि तमभिशोच यो अस्मान्द्वेष्टि यं च वयं द्विष्म इत्याक्तेनोदकेन खनति । २० ॥ धाम्नो धाम्न इति तद्व्याख्यातम् । २१ ।

---

6 (cf. MS. I, 2, 18; III, 9, 4. 10, 7; Âp. Çr. 7, 26-28; Schwab p. 149–164): 1) अनुयाजि° mss. ausser M1CP3 wie 1, 3, 4, 1, °यमाना-नङ्गा° corr. °यमानाङ्गा° d. mss , °गारानाग[गा-रान NS]रोपयिष्टुरुपसीदन् mss. ausser M1C, 2. समिधमादाया° M2B wie 1, 3, 1, 1, सकृत् M1 nur einmal. — 2) शामित्राद° corr. cf. zu 1,8,4,20 शामित्र्याद° M1C शामित्रीयाद° d. übr. cf. 2, 2, 5, 22. — 9) स्वरुम् noch einmal nach *juhvām* mss. ausser M1C, °धस्ताद्विरुप°C. — 11) °यूपे mss. ausser M1, °पस्पृश्यः corr. cf. MS. III, 120, 6 ff °पस्पृश्य d. mss. — 12 ff.) °वाकाय-सूक्ता M1C, संप्रेष्य (st. *sampraiṣaḥ*) mss. ausser M1C. — 14) सिद्धं (nicht *siddham ā*) so alle hier wie 1, 7, 4, 30. — 16) 1. उत्तानाये mss. ausser M1CP3, नोच्या उत्ता° corr. cf Âp. Çr. 7, 27, 10 ff. नोच्योत्ता° d. mss. mit krasis, 2. °ताना mss ausser M1CP3. — 20) इत्याक्तेनोदकेन so nach इत्याक्तेनोदकेन M1CP3, इत्यार्द्रेणोदकेन NS u. corr. B इत्यार्द्रेवाणो-

आशासानः सौमनसं प्रजां पुष्टिमथो भगम् ।
स्वगाकारकृतो मह्यं यजमानाय तिष्ठतु ॥

एष ते वायो ॥ नमः स्वरुभ्यो बृहद्भ्यो मारुतेभ्यः ॥ सन्नान्मावगाम् ॥ अपश्चाद्दघ्वानं भूयासमित्यनुदिशति यूपं यजमानः । २२ । वेदिं पर्योषति । २३ । षट्सु षट्सु मासेषु पशुना यजेत संवत्सरे संवत्सरे वा । २४ । नैनमनीजानं संवत्सरोऽतीयात् । यद्यतीयान्न मांसमश्नीयादा पशुबन्धात् । २५ । नातिप्रणीतेषु प्रणीता स्यादन्यत्र वचनात् । २६ । विष्णुक्रमप्रभृति समानं याजमानं याजमानम् । २७ । ॥ ६ ॥

॥ इति मानवसूत्रे प्राक्सोमेऽष्टमोऽध्यायः ॥

॥ इति मानवसूत्रे प्रथमः पञ्चभागः प्राक्सोमाख्यः समाप्तः ॥

---

दकेन M2 [sollte die version M1C richtig sein, so wäre der sinn: «mit dem angefeuchteten (herzbratspiess) wühlt er (die erde) auf (und steckt ihn dann hinein)»; die verdorbene version der übrigen mss. lässt den einfluss Âpastamba's u. a. erkennen, vgl. Schwab p. 161 ff.). — 22) घनम् (st. *bhagam*) M1 cf. aber auch 1, 2, 5, 12, तिष्ठतु corr. तिष्ठत् (so mit Virāma geschr.) d. mss., सन्नान्मा° so M1 सन्मा° C संनाम्ना° d. übr., अपश्चाद्दघ्वानं corr. schon v. Schroeder MS. III, 120, 17 °दघ्वानं M1 °दध्वानं d. übr. — 26) प्रणीता so alle.

Zu den von mir gesetzten Adhyāya-unterschriften sowie zur schlussunterschrift hier vgl. die unterschriften der mss. im Vorwort.

## INHALT.